# शाक्तपुराणेषु शक्तितत्त्व – समीक्षा

सम्पूर्णानन्द–संस्कृत–विश्वविद्यालयस्य

विद्यावारिधिः (पी-एच० डी० )

इत्युपाधये प्रस्तुतः

**शोध–प्रबन्धः**




१९९५

निर्देशकः
डॉ० लालविहारीशर्मापाण्डेयः
उपाचार्योऽध्यक्षचरश्च
पुराणेतिहासविभागे

अनुसन्धात्री
सूर्यमती देवी

सम्पूर्णानन्द–संस्कृत–विश्वविद्यालयः
वाराणसी

# शाक्तपुराणेषु शक्तितत्त्व – समीक्षा

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

विद्यावारिधिः (पी-एच॰ डी॰)

इत्युपाधये प्रस्तुतः

**शोध-प्रबन्धः**




१९९५

निर्देशकः

डॉ॰ लालबिहारीशर्मापाण्डेयः

उपाचार्योऽध्यक्षचरश्च

पुराणेतिहासविभागे

अनुसन्धात्री

सूर्यमती देवी

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

# निर्देशकप्रमाणपत्रम्

अनुसन्धात्री श्रीमती सुमतिदेवी सुपरिश्रम्य मामकीने निर्देशकत्वे 'शाक्तपुराणेषु शक्तितत्त्व विमर्शः' इति विषयमवलम्ब्य सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयतो 'विद्यावारिध्युपाध्युपलब्धये' आत्मनः शोधप्रबन्धं प्रस्तुतवती। मन्ये सोऽयं शोधप्रबन्धो नूनं परीक्षणार्हः सञ्जातः। अतोऽस्य परीक्षणार्थं व्यवस्थां विधाय अनुसन्धात्री - अवश्यमनुग्राह्य इति संस्तौमि।

निर्देशकः

लालबिहारी शर्मा पाण्डेय

(लालबिहारी शर्मा पाण्डेयः)

भूतपूर्व उपाचार्यः विभागाध्यक्षः

पुराणेतिहासविभाग

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी।

दिनांकः २५-९-९५

अग्रेसारयामि

# प्राक्कथनम्

सम्पूर्णमिदं जगत् परब्रह्मपरमात्मन: स्वरूपभूताया आदिशक्त्या: लीलाविलासितमेव । अनया शक्त्यैव जगत: समुत्पत्ति:, स्थिति: प्रलयादिकञ्च सम्पद्यते । अनेकविधाशक्तिषु क्रियाशक्तेर्महत्त्वमुद्घोषितं श्रुतौ --

परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च ।।

इदन्तु स्पष्टं यत् परब्रह्मणो इमा: स्वाभाविकशक्तय: प्रति कणचेतनात्मभूते जगति, अनुस्यूतं भूत्वा समस्तस्य जगद्व्यापारं सम्पादयति । जागतिकपदार्थेषु जडात्मिका शक्तिस्तथा - चेतनेषु चेतनाशक्ति: प्रतिकणं सक्रिया वर्तते । का नामेयं शक्तिरितिविवेचनायामाद्यशङ्कराचार्यै: --

परब्रह्ममहिषीति निर्णीय भणितवन्त:

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो,
हरे: पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापित्वं दुरधिगम नि:सीममहिमा,
महामाया विश्वं भ्रमयसि परब्रह्ममहिषी ।।

पुराणेषु शक्तितत्त्वविमर्श इत्यनुसन्धानप्रबन्धविषयस्योपबृंहणार्थं पुराणानि एव आधारभूतानि - वस्तुत: भारतीयसंस्कृतिदर्शनस्य मूलमाधारस्तु

वेद एव, विश्ववाङ्मये वेदात्प्राक्तनं किमपि साहित्यं नोपलभ्यत इति सर्वैः पौरस्त्यैः पाश्चात्त्यैश्च विपश्चिद्भिरङ्गीक्रियते । तन्मूलक स्मृतिपुराणानुसारमाचरन्ति, व्यवहरन्ति च निरन्तरम् । संस्कृतवाङ्मये पुराणानामस्ति विशिष्टं स्थानम् । वेदस्मृत्योरनन्तरं पुराणानामेवास्तिक जाति प्रामाण्यमङ्गीक्रियते । यतोऽत्र वेदार्थमेव स्पष्टीकर्तुं ज्ञानकर्मोपासनानां सिद्धान्ता अतिसरलया भावगम्यया प्राञ्जलया भाषया विविधानि भक्तशिरोमणीनां मानवमणीनां कथाभिः सम्यगवबोधिता सन्ति, येषां मननद्वारा साधारणबुद्धयोऽपि जनाः व्यावहारिकीं स्थितिं सम्पादयन्तो वेदोपनिषद् प्रतिपाद्यं मानवानां प्रधानं लक्ष्यं परमात्मानं प्राप्य मुक्ता भवितुमर्हन्ति । यथा दिवसे प्रकाशो भगवता भास्करेण भवति, रात्रौ प्रकाशश्चन्द्रमसा क्रियते, गृहान्धकारो दीपेनोपनीयते, तथैव परमात्मस्वरूपप्रदर्शनार्थं ज्ञानं तु वेदमूलकैः पुराणवचनैरेव सम्भवितुमर्हति । विविधाभिर्वासनाभि भूयो भूयो भवाब्धावस्मिन् भ्राम्यमाणानां जीवानां कृते पुराणमस्ति सरल आलोकमार्ग इति विस्तृतिस्तु प्रथमाध्यायस्य पुराणपरिचयप्रसङ्गे समुपबृंहितः ।

शोधप्रबन्धस्य प्रारूपम् :-

निबन्धेऽस्मिन् पञ्चाध्यायाः सन्ति -

तत्र प्रथमे चाध्याये पुराणवाङ्मयस्य विस्तृतं विवेचनम् ।

द्वितीये - पुराणानां सात्त्विक-राजस-तामसभेद परिगणनपूर्वकं शक्तितत्त्व-द्योतक पुराणानां चर्चा ।

तृतीये- शक्ति-शक्तिमतोरभेदपरिकल्पना ।

शक्तिस्वरूपविभेदः ।

चतुर्थे- शक्तिसिद्धपीठानां संक्षिप्तः परिचयः ।

पञ्चमे - शिवाचर्योपयोगिता

षष्ठे - उपसंहारः ।

## आभार प्रदर्शनम्

प्रस्तुत शोध-प्रबन्धस्य 'पुराणेषु शक्तितत्त्वविवेचनमिति' गवेषणायां येषां विद्वरेण्यानां गुरुवर्याणामितरेषाञ्च महामनीषिणां यत्किञ्चिद्-वेदितं मार्गनिर्देशनं सहाय्यं वा सम्भाग्यतः तुलमभूत सर्वप्रथमं पूज्यपादानां सं०सं० पुराणेतिहासविभागस्याध्यक्ष पदमलंकुर्वाणानां विविध विद्या-उलंकृतानां मार्गनिर्देशनानुग्रह विधातां श्रीमतां डा० लालबिहारी शर्मपाण्डेय महाभागानां श्रीचरणेषु सप्रणतिपातं सप्रश्रयञ्च कृतज्ञतां ज्ञापयामि । येनहिमार्गः मनीषिवर्यैः नितान्तव्यस्तोऽपि कार्यकाले शोधप्रबन्धस्य प्रस्तुतौ वाञ्छिता दध्यधिकं दिग्निर्देशनं विहितम् । तदनु साहित्यसंस्कृतिसंकायाध्यक्ष पद प्रतिष्ठितानां संस्कृतवाङ्मयार्णवे सेतु स्वरूपाणां कैलाशपतित्रिपाठि-महोदयानामभ्यधिकाः परम्पराणां न कदापि विस्मृतिं विधातुं पारयामि ।

एतस्मिन्नेव प्रसङ्गे विविध विद्यापारंगतानां प्राच्यप्रतीच्योभय-विद्यानिष्णातानां पद्मविभूषणेतिमहोच्चपदवीं समलङ्कृतानां स्मरणीय-पादानां पण्डितप्रवरबलदेवोपाध्यायानां पादपद्मयोः प्रणतिं विधाय कृतज्ञतां विज्ञापयामि येषां महानुभावानां पुराणवाङ्मय सेतुभूतं पुराणविमर्शादि-ग्रन्थावलोकेन परिणतिस्वरूपमेतत् शोधप्रबन्धनिष्पादनमभूत् ।

पुराणेतिहासविभागस्यैव प्राक्तनाध्यक्षवरान् डा० कपिलदेवत्रिपाठिमहोदयान् प्रत्यपि हार्दिकं सम्मानमाभारञ्च भूरिश: विनिवेदयामि यतोहि निबन्धेऽस्मिन् येषां सहयोगजातं सततमुपलब्धमासीत् ।

विश्वविद्यालयस्यास्य पुस्तकाध्यक्षपदमलङ्कुर्वाणान् पण्डितप्रवर श्री विजयनारायणमिश्रमहोदयानपि सादरं संस्मरिष्यामि येषामनुकम्पया अपेक्षितग्रन्थावाप्ति: समये समये न जातु दुष्प्राप्यतामव्रजत ।

तदनु श्रीमतां पूज्यपितृपादानां मातृचरणानामपरेषाञ्च न कदापि मम स्मृतिपथाद्बहिर्यास्यति पृष्ठानुजश्चिरञ्जीवी ओम्प्रकाशभारती विशेषतोऽपि सस्नेहं धन्यवादार्ह: येन आत्मीयताप्रदर्शनपुरस्सरं भगिनीगौरवं सदैव विनिर्व्यूढम्।

शोधप्रबन्धस्यास्य टङ्कणभारमधिगृहीतवन्त: श्री म० यादवस्यापि सहयोगं कथङ्कारं विस्मरिष्यामि येन स्वल्पावधावेव मनोयोगेन शोधप्रबन्धमेनमुट्टङ्कितम्। अन्ते च अधोनिर्दिष्टां सूक्तिमेनामुद्धरमाणा स्वाभाविकान् त्रुटिविशेषान् क्षमापयन्ती अध्येतृवरान् प्रत्यपि --

गच्छत: स्खलनं क्वापि भवत्येव प्रमादत: ।
हसन्ति दुर्जनास्तत्र समादधति सज्जना: ।।

इति सविनयं विरमामि ।

वशंवदा
सूर्यमतीदेवी
(सूर्यमती देवी)
पुराणेतिहासविभागीया

## विषयानुक्रमणिका

पृ० संख्या

पृष्ठांक

---:0:---

## पुराणानां परिचयः

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

वैदिकसाहित्ये पुराणानामतीव गौरवास्पदं स्थानम् । वेदार्थ-जातं सारल्येनावगमयितुमेवैतेषां प्रवृत्तिः । नूनं वेदार्थोपबृंहणानि पुराणानी-त्यतीव प्राचीन प्रवादो यथार्थ एव ।

महाभारतेऽपि -

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ॥

इत्यनेन अल्पश्रुतानां वेदार्थतत्त्वबुभुत्सूनां कृते पुराणानि निर्मितानि महर्षि-भिरिति संसूच्यते --

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ,
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥

येषु पञ्चलक्षणानीमानि पूर्णतया संगच्छन्ते तान्येव पुराणकोटिमाटीकन्ते ।

अघटिताखिलपुराणलक्षणानि तु उपपुराणश्रेणिमाश्रयन्ते ।

म द्वयं भ-द्वयञ्चैव ब्र-त्रयं व-चतुष्टयम् ।
अ ना प लिंग कूस्कानि पुराणानि प्रचक्षते ॥

इत्यनेन श्लोकरत्नेन पुराणानि अष्टादशसंख्यकानि सन्तीति प्रतिपादनपुरस्सरं प्रथमाक्षरश्लोकेन तेषां नामान्यपि सम्भूतानि सङ्केतितानि च।

तदेवं - मत्स्य, मार्कण्डेय, भागवत, भविष्य, ब्रह्माण्ड, ब्रह्मवैवर्त, ब्रह्म, वामन, वराह, विष्णु, वायु, अग्नि, नारद, पद्म, लिङ्ग, गरुड, कूर्म, स्कन्दान्यष्टादशपुराणानि विज्ञेयानि।

वैदिकसाहित्यपर्यालोचनेन विज्ञायते, यत्पुराणानि अतिप्राचीनकालतः प्रचलितानि वर्तन्ते। एषाञ्च वेदमूलकत्वं तद्विशेषज्ञाः स्वीकुर्वन्ति, उदाहरन्ति च --

ऋचः सामानि छन्दांसि पुराणं यजुषा सह।[1]
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवाः दिविश्रिताः॥

'स बृहतीं दिशमनुव्यचलत्, तमितिहासश्च पुराणञ्च, गाथाश्च नाराशंसीश्चानुव्यचलन्। इतिहासस्य च वै स ह पुराणस्य च गाथानाञ्च नाराशंसीनाञ्च प्रियं धाम भवति य एवं वेद'[2]।

---

१- अथर्ववेद ११।७।२४

२- ,, १५।६।११-१२

'एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः'।[1]

सोऽयमिति किञ्चित्पुराणमाचक्षीत[2]।

इतिहासः पुराणं विद्या उपनिषदः[3]।

छान्दोग्येऽपि-

ऋग्वेदं भगवोऽध्येमी'त्यारभ्य इतिहासपुराणं, पञ्चमं वेदानां वेद'मित्यादि।

आपस्तम्बधर्मसूत्रे तु स्फुटं पुराणानां श्लोकसंख्यापि निर्दिष्टा।

अथ पुराणे श्लोकानुदाहरन्ति[4]।
अष्टाशीति सहस्राणीति॥

एवं विधानि वर्णनानि प्रव्यक्तं पुराणानामतिप्राचीनत्वं सूचयन्ति परमुपलभ्यमानानि बृहदाकाराणि पुराणानि, विशुद्धरूपाणि प्रक्षेपोत्सादाभ्यामव्याकुलीकृतानि सन्त्यथवा परिवर्तन-परिवर्धनप्रक्षेपापकर्षादिसङ्कुलतया विकृतिं गतानि इति महान् प्रश्नः?

- - - - - - - - - - - - - - - - - -

१- गोपथप्रपाठक-२

२- शतपथब्राह्मण-१३।४।३।१३

३- बृहदारण्यकोपनिषद् २।४।१०

४- आपस्तम्बधर्मसूत्र २९।२२।३५

भवतु तद्यथा तथा वा भवन्तु, सुनिश्चितं यत् पुराणसाहित्यं भारतीयाचारव्यवहारस्य आर्षसांस्कृतिकपरम्परायाः धर्मार्थकाममोक्षोपयिकपदेशानां महानुरत्नाकरः, नास्ति तादृशो विषयो लोकहितावहो यस्तत्र न वर्णितो भवेत् ।

पुराणानां परिचयमियत्तानिर्धारणार्थमन्तरङ्गप्रमाणानि प्रस्तूयन्ते --

(१) मत्स्यपुराणम् : 'तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश (१४०००) ।

(२) मार्कण्डेयम् : पुराणं नवसाहस्र (९०००) मार्कण्डेयमिहोच्यते ।

(३) भागवतम् : तद्भागवतमुच्यते, अष्टादशसहस्राणि (१८०००) पुराणं तत्प्रकीर्त्यते ।

(४) भविष्यपुराणम् : चतुर्विंशत्सहस्राणि तथा पञ्चशतानि च (२४५००) भविष्यचरितप्रायं भविष्यदिहोच्यते ।

(५) ब्रह्मपुराणम् : ब्राह्मं त्रिदशसाहस्रम् (१२०००) पुराणं परिकीर्त्यते ।

(६) ब्रह्मवैवर्तम् : तदष्टादशसाहस्रम् (१८०००) ब्रह्मवैवर्तमुच्यते ।

(७) ब्रह्माण्डपुराणम् : तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम् (१२२०) ।

(८) वामनम् : पुराणं दशसाहस्रं (१००००) वामनं परिकीर्तितम् ।

(९) वाराहपुराणम् : चतुर्विंशत्सहस्राणि तद्वाराहमिहोच्यते (२४०००)।

(१०) विष्णुपुराणम् : त्रयोविंशतिसाहस्रं वैक्रमम् (२३०००)।

(११) वायुपुराणम् :चतुर्विंशत्सहस्राणि वायवीयम् (२४०००) ।

(१२) अग्निपुराणम् : आग्नेयं तच्च षोडशसाहस्रं सर्वक्रतुफलप्रदम्

(१६०००)।

(१३) नारदीयम् : पञ्चविंशत्सहस्राणि (२५०००)नारदीयं तदुच्यते ।

(१४) पद्मपुराणम्: पाद्मन्तु पञ्चपञ्चाशत् सहस्राणीह(५५०००)कथ्यते।

(१५) लिङ्गपुराणम् : कल्पान्ते लैङ्गकमित्युक्तं तदेकादशसाहस्रम्

(११०००)

(१६) गरुडपुराणम् : गारुडं तदिहोच्यते अष्टादशसहस्राणि(१८०००)।

(१७) कूर्मपुराणम् : कूर्मरूपो जनार्दनः,ष्टादशसहस्राणि(१८०००)।

(१८) स्कन्दपुराणम् : स्कन्दनामपुराणञ्च ह्येकाशीति निगद्यते ।

सहस्राणिशतञ्चैकं (८११०००)इति ।

एवं संख्येषा सम्प्रत्युपलभ्यमानेषु पुराणग्रन्थेषु भूम्ना भेभिद्यते । एवं विधभेदस्य प्रक्षेपोत्सादादतिरिक्तं तु कारणान्तरं निपुणं मृग्यमाणमपि न बुद्धिपद्धतिमवतरतीति । पुनरुक्तिदोषस्तु तेषु यत्र तत्र विप्रुषानिव उपतिष्ठ

प्रायशः विषयसाम्यं, कथासाम्यं,भाषासाम्यं सर्वत्र पदमादधाति । प्रावृषि यथैव निर्मलमपि गाङ्गं जलं रजस्वलं सम्पद्यते । तथैव पौराणिकं साहित्यमिदं सांकर्यसंकुलं संवृत्तम् । इत्यत्र न कस्यापि वैमत्यम् । यदि नाम कदाचित्-सं० या भूतभेदानामखिलपुराणपद्यानां सारमादाय संक्षेपः क्रियेत तर्हि परिमितैरधिकाधिकसहस्रमितैः श्लोकैरेव सर्वं तत्त्वार्थजातं परिसमाप्येत । तथापि यदि सदसद्विवेकवन्तो विद्यावन्तो ।

'हंसो यथा क्षीरमिवाम्बुमध्यादि'ति हंसवृत्तिमुररीकुर्वन्तो वर्तेरन् , अवश्यमेव ततः कौतामलमूर्तं पयः समुपलभेरन्, 'सन्तः परीक्ष्यान्यतरद् भजन्ते' इत्युक्तिं चरितार्थयन्तः ।

यद्यपि केचनक्रीतावन्तः तथाकदर्थितानां पुराणानां विश्वसम्भूता-न्यवत्याज्यत्वं गृह्णन्ति, तथापि तेषां सार्थकत्वं चोरयितुं तु कः क्षमः ।

'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा'[१]

बुद्धिनिकषे परीक्षितानि वस्तूनि सारासारं स्वयमेवोद्गमन्ति ।

देवीभागवतपुराणानुसारेण मत्स्यपुराणस्य श्लोकसंख्या एकोनविंशति सहस्रमिता, परन्तु सम्प्रति समुपलब्धे मत्स्ये त्रयोदशसहस्रमिता एव दृश्यते । मनुमत्स्यसंवादः जगदुत्पत्तिप्रलयवर्णनम्, ब्रह्मोत्पत्तिः वेदप्रादुर्भावः, मरीचिनारदाद्युत्पत्तिः, आदिसृष्टिविवरणम्, मानुषी सृष्टिः, देवीसृष्टिः काश्यपान्वय-

वृत्तान्तः दितिकथाप्रसङ्गे मदनद्वादशीमाहात्म्यम्, मरुतामुत्पत्तिः लोकपाला-भिषेचनम्, मन्वन्तरानुकीर्तनम्, वैन्यचरितम्, सूर्यवंशनिरूपणम् आदि अन्ते श्रीकृष्णस्य षोडशसहस्रस्त्रीणां पुत्राणाञ्च नामादिकीर्तनम् । कल्क्यवतार-विवरणञ्चेति ।

पुराणसाहित्यं लोकपरलोकस्वरूपावबोधार्थं अत्यन्तमुपयोगिता-मावहति । समानतात्पर्यविषयीभूतानां पुराणानां परस्परं निन्दात्मकाः श्लोका दृष्टिपथं प्रयाता हृदयमतिमात्रं व्याकुलयन्ति। विष्णुपुराणे शिवनिन्दा शिवपुराणे च विष्णुनिन्दा न शोभावहा । नूनं परस्परं भेदभावमङ्कुरयितुमेव प्रक्षेपरूपेण एवम्विधाः श्लोका अनुस्यूताः स्युरिति प्रतीयते । वैदिकसिद्धान्तानां एकवाक्यतां प्रतिपादयिष्णूनां पुराणग्रन्थानां मिथः कलहायमानानां गति-विधिं अभिनो नाऽपि प्रहर्षं इति को नाम नोरीकुर्यात् ।

पुराणं मानवानां हृदयान्धकारस्यापकरणाय सर्वदा मणिमय प्रकाशकमस्ति। परमतत्त्वदृष्ट्या पुराणं हि कूममस्ति महेयं शास्त्रम् । पुराणेषु विविधैर्विविधैर्भिन्नैर्भिन्नैर्विविधेभ्योऽधिकारिभ्यो विविधैः प्रकारैः परमं पुरुषार्थमवगन्तुमुपायाः प्रदर्शिताः सन्ति । अद्यत्वे पुराणानां सम्यगध्ययना-भावादेव तत्र निर्मूला अनेके आक्षेपा भवन्ति। गम्भीरतया तदनुसन्धाने क्रियमाणे तेषामाक्षेपाणां अनायासेन निराकरणं जायते ।

पुराणानामन्तस्तलं प्रविश्य समीक्षायां क्रियमाणायां स्फुटमेवगम्यते यत् पुराणेषु देशकालस्थित्यनुसारं सर्वानुकूलं कर्तव्यमुपदिष्टं वर्तते, येन मानवानां सर्वथा कल्याणमेव जायते । अतः पुराणपारायणशीले-र्विद्वद्भिर्भारतीयजनतायाः महते उपकाराय राष्ट्रसमुन्नतये च पुराणज्ञानराशिर्नूनं प्रसारणीयः प्रचारणीयश्च । अद्यत्वे स्वतन्त्रतायाऽर्धशताब्दीकाले नित्यनवो-रुत्साहैरभिनवचार्वाकविज्ञानयुगेऽपि पुराणानि महान्तमुपकारं कर्तुं प्रभवन्ति ।

भारतीयपद्यप्रदीपाय पुराणानि महाभारतं रामायणञ्च सर्वतो-ऽधिकं साहाय्यं विधातुं प्रभवन्ति। यतो हि पुराणादीनां भूमिः समस्तं भूमण्डलं वर्तते, न च केवलं भारतवर्षमात्रम् । पुराणव्यवस्थायां विश्वबन्धुत्व-स्यादर्शो निहितोऽस्ति, येनान्ताराष्ट्रियसमस्यायाः समाधानेऽपि पर्याप्तं साहाय्यं भवितुमर्हति ।

लौकिकविषयाणामिव पारलौकिकविषयाणामपि पुराणेषु पर्याप्तं विवेचनं विद्यते । यतो हि पुराणानां दृष्टिपथे न केवलं भारतवर्ष-स्यापितु तत्रोर्ध्वाधोभागे वर्तमानानां चतुर्दशभुवनानामपि पदार्थाः सम्यक्-विवेचिताः सन्ति। एवं सार्वजनीनं हितमुपदेष्टुं प्रवृत्तानां पुराणानां समीक्षा-परिचय कस्य सचेतसो मानवस्य न प्रियकारी कल्याणकारी च स्यात् ?

पुराणं हि हिन्दुजातेः सर्वस्वं भारतीयसंस्कृतेः पोषकं मानव-समाजस्य पथप्रदर्शकमार्यसाहित्यस्य च आधारस्तम्भो विद्यते। येन सर्वविधं धार्मिकनैतिक-सामाजिकसद्व्यवहारादीनां बोधिष्यमवाप्यते। भारतीयप्राचीनेतिहासस्यान्धकारे युगेऽपि पुराणप्रभया प्रकाशः प्राप्यते। अतएव महर्षिणा याज्ञवल्क्येन विद्यागणनायां पुराणस्य प्राथम्यमुपात्तम्।

पुराण न्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश[1]।।

यथा वेदा ईश्वरानुग्रहेण पूर्वं ब्रह्मणो हृदि आविर्भूताः ततो विभिन्नानां महर्षिणां हृदाकाशे प्रकाशिताः, तदनन्तरं च मानवसमाजं विसृताः तथैव सर्वप्रथमं पुराणविद्या ब्रह्मणैव स्मृता, तदनु देवर्षिहृदयेषु प्रस्फुरिता, पश्चात् कथनोपकथनद्वारा मानवेषु प्रसरन्ती महर्षिव्यासद्वारा ब्रह्मपद्मादि-पुराणरूपेणोपनिबद्धा सती लोककल्याणं कुरुते[2]।

अत एवोभयमर्मज्ञो भगवान् व्यासो वेदविभाजयिता, पुराणसंकलयिता चोच्यते। भारतीयपरम्परानुसारं वेदमन्त्राणां गूढाऽर्थो ब्राह्मणग्रन्थद्वारा अव-गम्यते, तस्य स्पष्टीकरणञ्च पुराणेतिहासाभ्यां भवति। पुराणेषु येऽर्था उक्ताः सन्ति, ते वेदार्थस्य विस्तृतरूपा विद्यन्ते। भगवता व्यासेन पुराणा-तिरिक्तमेकं महाभारतमपि रचितं, यत्र सर्वविद्यानां संग्रहो जातः। तदर्थं तेन प्रतिज्ञातं यत् - यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।

---

१- याज्ञवल्क्य स्मृति १।३
२- पुराण [illegible]

महाभारतमितिहासत्वेन्या लिखितमस्ति । पुराणेतिहासयोः यज्ञ-दान-तीर्थ व्रतोत्सवादीनां वर्णनप्रसङ्गेन प्राचीनस्य भारतीयसमाजस्य प्रत्यक्षं रूपं दृष्टिगतं भवति, यत्रायत्ते हिन्दुसंस्कृतिरवलम्बिताऽस्ति ।एवं पुराणेतिहासाभ्यां नूनं प्राचीनभारतस्य ज्ञानराशिर्वमवगम्यते । आधुनिक-भूगोलशिक्षार्थमपि पुराणानामनुशीलनमत्यावश्यकमस्ति। भौगोलिकदृष्ट्या मिस्रदेशस्य सुप्रसिद्धाया नीलनद्या तदेव स्थानमस्ति यद् भारते भगवत्या भागीरथ्या गङ्गायाः क्रियते ।

यदि वेदा भारतीयसंस्कृतेः सर्वोच्चमुद्गमं स्थानमस्ति तर्हि पुराणानि सन्ति । भारतीयसंस्कृतेः शाश्वतानि स्रोतांसि । हिन्दुजाति-संस्कृतिसम्बन्धिनः कदाचिदेव केचन एवम्विधा विषयाः सम्भवेयुः येषु प्रकाशः पुराणे न दत्तः स्यात् । वेदानन्तरं भारतीयसंस्कृतेर्वास्तविकं स्वरूप-मस्माभिः पुराणैरेवावगन्तुं शक्यते । पुराणानुसारं पुराणानि हि धार्मिक-सामाजिक-सांस्कृतिक-राजनीतिक आर्थिकादिषु क्षेत्रेषु लोकवर्गस्य विचाराणां कार्याणां च यथार्थं चित्रमुत्थापयन्ति । पुराणानामनुशीलनेनास्माभिः स्व-जीवनोद्देश्यपूर्त्यै आदर्शमयः समुपदेशो लभ्यते ।

यतो हि पुराणेष्वैकलैवाहिकामुष्मिकहितसिद्धये उदाहरण-प्रत्युदाहरणाख्यानकोपकथानकद्वारा शुभकर्मणिप्रवृत्त्येऽशुभकर्मभ्यश्च निवृत्त्ये

सदुपदेशो दर्शितो ऽस्ति । पुराणानुसारमस्माकं देशस्य नामास्ति भारतवर्षम् । तथान्तनिवासिन्या: प्रजाया नामास्ति भारतीय । पुराणेषु भारतवर्षस्य भौगोलिको विस्तार: समुद्रादुत्तरे हिमालयाच्च दक्षिणे प्रोक्तास्ति, तथा कन्याकुमारीतो हिमालये गङ्गाया उद्गमस्थानपर्यन्तं विस्तृतो भूभागो भारते सम्मिलितोऽभिमतोऽस्ति ।

आयतो ह्याकुमारिक्यादागङ्गाप्रभवाच्च वै ।
तिर्यगुत्तरविस्तीर्ण: सहस्राणि नवैव तु [1] ।।

निरुक्तशास्त्रदृष्ट्या वायु-मत्स्यपुराणयोर्भारतवर्षस्य निर्वचनं कृतमस्ति यत् प्रजानां भरणपोषणकारणादेका संज्ञा भारत इत्यस्ति ।

भरणाच्च प्रजानां वै मनुर्भरत उच्यते ।
निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम् [2] ।।

एतस्मिन्निरुक्तेराधारेणायं देशो भारतमित्युच्यते । भरणपोषणात्मकेन गुणेन मनुर्भरत: प्रोक्तोऽस्ति, तथा यत्र भूभागे मनुपद्धत्यनुसारं तत् सन्ततयो निवसन्ति तन्नाम भारतमिति जातम् ।

---

१- वामनपुराण-४५।८१

२- ,, ,, -४५।७६

पुराणोतिहासयो: या भारतवर्षस्य वन्दना विद्यते तासु महाभारतस्य भीष्मपर्वणि भारतवन्दना भावदृष्ट्या अत्यन्तमुत्कृष्टाऽस्ति । तेषु श्लोकेषु येषां चक्रवर्तिनां राज्ञां नामानि गणितानि सन्ति, तेषां धार्मिको भाव:, प्रजावत्सल्यम्, सत्यपालनम्, परोपकारमयं जीवनम् । निरन्तरं लोककल्याण-कामना, तै: स्थापिता आदर्शमयी व्यवस्था च भारतीयगौरवस्यास्ति विषय:।

ये महापुरुषा: स्वदेशस्य कालस्य च प्रतिनिधयो भवन्ति तेषामेव वृत्तान्तोपस्थापनं पुराणोतिहासयोरनिवार्यं जायते । पुराणेषु भारतवर्षं स्वर्गादपि उत्कृष्टं वर्णितमस्ति। तथाहिविष्णुपुराणे --

तत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।
यतो हि कर्मभूरेषा ततोऽन्या भोगभूमय: ।।
अत: सम्प्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्ति वै ।
तिर्यक्त्वं नरकं चापि यान्त्यत: पुरुषा: मुने [१] ।।

पुराणानुसारेण जम्बूद्वीपे वर्तमानेभ्योऽन्यवर्षेभ्यो भारतवर्षं सर्वश्रेष्ठं ज्येष्ठं चाभिमतम् । यतो हि अन्यानि वर्षाणि केवलं भोगस्थानानि सन्ति, किन्तु भारतं कर्मभूमि: प्रथिताऽस्ति। अत्र सत्कर्मानुष्ठानद्वारा मानवो भोगं मोक्षं चोभयमपि लब्धं शक्नुयात् । इदमस्य रहस्यम् ,भारतभूरेव सदसत्कर्मा-नुष्ठानयोग्या भूमि: भारतादन्या भूमयो हि सुखदु:खजन्यात्कारणस्य भोगस्य

---

१- विष्णुपुराण २।३।४।२२

स्थानानि । अतैवानुष्ठितेन विहितकर्मणा धर्मः निषिद्धेन च कर्मणा धर्मो जायते, ताभ्यां च यथाक्रमं सुखदुःखे तद्भोगश्च जायन्ते नत्वन्यत्र समनुष्ठितेन कर्मणा तथेति भाव ।

पुराणपरिचयद्वारा प्राचीनेतिवृत्त सृष्टिप्रलय वंशवंशावलीयुग मन्वन्तर-कल्पादीनां सम्यग् ज्ञानमुपजायते, तथा पुराणानामाख्यानोपाख्यानगाथाभिः वेदानां वास्तविकोऽर्थोऽवगन्तुं शक्यते । पुराणे स्वपूर्वजातानां निर्मलो विचारो ज्ञायते, तथा पुराणानामनुशीलनेनैव विभिन्नजातीनामुत्पत्तिः समस्तस्य विश्वस्य विभिन्नभागानां भिन्नभिन्ननियमाश्च ज्ञायन्ते ।

पुराणपरिचयज्ञानं विना संसारोऽन्धकारमयो भवति। उपासनाया भाण्डारम्, मुक्तेर्द्वारम्, ज्ञानस्याकारः भक्ते साधनम् कर्मणां प्रदीपश्च पुराणमेवास्ति ।

भारतीय जीवनस्य प्रतिबिम्बं पुराणेषु पर्याप्तरूपेण परिलक्ष्यते । अत ऐतिहासिक सांस्कृतिक साहित्यिकदृष्टिभिः पुराणानि महत्वपूर्णानि गवेषणीयानि च सन्ति। सदाचारिणां लोकप्रख्यातानामादर्शचरित्राणां महापुरुषाणां जीवनवृत्तान्त-पुराणेतिहासस्य प्रमुखमङ्गानि, पौराणिके इतिहासे साधारणतया तेषामेव महापुरुषाणां साधकानां सिद्धानां वृत्तान्तस्य चित्रणं विद्यते, यैः स्वकीयस्य धर्मस्य कर्तव्यस्य संस्कृतेस्तथा स्वदेशस्य संरक्षणं सर्वतो भावेन कृतमस्ति ।

पौराणिके इतिहासे तु यद् वृत्तं यादृशं जातमस्ति तद्रूपमेवा-ङ्कितमस्ति । पुराणेतिहासस्य द्वे प्रमुखे लक्ष्ये भवतः -- महापुरुषाणां परिचयो, भूगोलस्य वास्तविकं ज्ञानम् । अनया दृष्ट्या पौराणिक इतिहासो महतो महत्त्वस्यास्ति । संस्कृतसाहित्येतिहासः (महाभारतम्) देशस्यास्य सर्वाङ्गीणया समुन्नत्या सह भूगोलस्य भारतीयनीतेर्विख्यातवीराणाञ्च चारु चित्रं प्रदर्शयति, रामायणं च तात्कालिकस्यादर्शमयस्य गार्हस्थ्यजीवनस्य स्वरूपमुपस्थापयति, उत्तरतो दक्षिणपर्यन्तं भूगोलस्य सम्यक् परिचयं प्रददाति यथा पुराणानि समस्तस्य भूमण्डलस्य द्वीपोपद्वीप समुद्रवनपर्वतनदनदीप्रभृतीनां भौगोलिकज्ञानेन सह स्वकथाद्वारा समाजस्योन्नतेरवनतेश्चोदाहरणमुपस्थाय मानवजन्मनो वास्तविकस्य लक्ष्यस्य भगवत् प्राप्तेः प्रेरणां प्रददाति । यतो हि पौराणिकस्येतिहासस्य प्रमुखं लक्ष्यमाधिकमेवाध्यात्मिकमेवास्ति ।

पौराणिकयुगे राजानो महाराजाश्च तपस्विनामाचारनिष्ठानां ब्राह्मणानां खलु परामर्शैः सर्वाणि कार्याणि कुर्वन्ति स्म । तेषां सभा प्राय आध्यात्मिकानां विषयाणां निश्चयार्थमेव भवन्तिस्म ।

पुराणानुसारं स्वपूर्वजानां अनुरागोऽस्माकं रुधिरेषु प्राप्यते । पुराणेतिहासद्वारा यदाऽस्माकं केषाञ्चित् महापुरुषाणां च दयालुता ,

धार्मिकता, उदारता, वीरता, दानशीलता, लोकोपकारिता, सत्-साहसपूर्ण-जिज्ञासादीनां वर्णनमस्माकं कर्णकुहरेषु उपतिष्ठते तदास्माकं हृदयेषु चामत्कारिक आह्लाद उत्पद्यते येन वयमपि तदनुकरणकरणे बाध्या भवामः। अतः स्वकीयोत्कर्षप्राप्तिनिमित्तं पुराणानामैतिहासिकं परिचयमत्यावश्यकमस्ति।

पुराणैः वेदस्य चमत्कारपूर्णानि आलङ्कारिकवर्णनानि ऐतिहासिकैः सह पुरुषैः घटनाभिश्च सह मेलयित्वा तासां वास्तविकं तात्पर्यं परिचयं च साधारणजनतापर्यन्तं समुपस्थापितं,यतः साधारणजनता वेदानां मूर्तं रहस्यमयं रूपं सम्यक् ज्ञातुं न प्रभवति, अथवा तस्याः तच्छ्रवणस्याधिकार एवनास्ति --

स्त्री शूद्र-द्विजबन्धूनां त्रयी न श्रुतिगोचरा[१]।

यथा पुराणानां भुवन विन्यासप्रकरणं पठित्वा तात्कालिकभौगोलिक-रहस्यानां ज्ञानं जायते तथैव राजवंशवर्णनप्रसङ्गे अनेकेषामैतिहासिकतथ्यानां ज्ञानं प्राप्यते। मन्वन्तरस्य राजवंशप्रकरणस्य च पठनेन प्रतीयते यत् पूर्वकाले सप्तसिन्धुनिवासिनः आर्याः कथङ्कारं पूर्वपश्चिमदक्षिणोत्तरेषु गत्वा स्वराज्यस्थापनं संस्कृतिविस्तारमाचारविचारसंरक्षणं स्वनाम्ना नगराणां नामकरणं च कुर्वन्ति स्म।

---

१- श्रीमद्भागवत् १।४।२५

तुर्वसुवंशवर्णनप्रसङ्गे ययातिपुत्र तुर्वसुवंशलोपे सति पुरुवंशीकुमारो दुष्यन्त-पुत्रः स्वीकृतोऽस्ति । यस्य परम्परायां करूप उत्पन्नो यस्य पाण्ड्य केरल-चोल कुल्यनामानश्चत्वारः पुत्रा अभूवन् । यै सुदूरे दक्षिणे गत्वा पाण्ड्य केरल-चोल कुल्यराज्यानि स्थापितानि ।

तथा तद्वंशे गान्धारनामक एको राजा बभूव यस्य नाम्ना गान्धारो जनपदः प्रसिद्धः। अनेनेदं ज्ञायते यत् प्राचीनकाले भारतीयानां हृदयेषु नवीना-नामुपनिवेशानां निर्माणस्य स्वसंस्कृतेः प्रचारप्रसारयोश्चोत्साहस्तथैवासीद् ।

पुराणेषु ऋषिवंश प्रियव्रतवंश इक्ष्वाकुवंश पुरुवंशवर्णनेन वैदिककालतः पुराणकालपर्यन्तं ऋषीणां राज्ञां परम्परायाः सम्यक् ज्ञानं परिचयं जायते । अर्जुनस्य वंशपरम्परायाः वर्णनं परिचयं भविष्यकथनरूपेण उदयनपर्यन्तं कृतमस्ति । यो हि गौतमबुद्धसमकालीन आसीत् । तेन गौतमबुद्धपूर्ववर्तिनि इतिहासे ईषदा भासः प्रपतति ।

पुराणेभ्योऽतीतसामग्री प्रचुरमात्रायामुपलभ्यते ।अतएव पुराणानां परिचयप्रसङ्गे विविधविषयेषु इतिहासतत्वमपि एको महत्वपूर्णं विषयो-ऽस्ति । पुराणानां पञ्चलक्षणान्तर्गतानि वंशमन्वन्तर वंशानुचरितानि च पुराणानामैतिहासिकस्याध्ययनस्य कृते पर्याप्तां सामग्रीं प्रस्तुवन्ति ।

नानापुराणानां सारोद्धारमते पुराणेषु इतिहाससमीक्षणं, महाभारतपूर्ववर्तिचन्द्रसूर्यराजवंश विवरणं, महाभारतोत्तर राजवंशदिग्दर्शन-परिचयः। ऋषिवंशानुकीर्तनं, मनुकन्यावंशविवरणं, दक्षकन्यासन्ततिपरिचयः, देवासुरसंग्रामस्यैतिहासिक महत्वम्, दैत्यदानवानां शक्तिस्रोतः, दैत्यदानव-राक्षससंस्कृतिपरिचयः ।

भक्तितत्वपरिचयविवेचनम् भक्तिलक्षणं,भक्तेर्भेदविवेचनं,भक्तिशास्त्र-परम्परापर्यालोचनं, भक्तिरससमीक्षणं, मधुरभक्तिपरम्परापर्यालोचनम्,भक्ते-रुद्गमस्थान समीक्षा, भक्तेरुपासनामूलकतत्वस्य समीक्षणम्, अवतारतत्व-समीक्षणं, अवतारप्रयोजनं, अवताराणां मान्यता, अवतारवादो विज्ञानवादः, अवतारभेदविवेचनं, अवतारविषयिणी भ्रान्ति, अवतारशब्दार्थं, वैदिकवाङ्मय-गत अवतारवादस्य परिचयः ।

कालपरिमाणविवरणं, युगमन्वन्तरकल्पानां विवरणात्मकं परिचयं, ब्रह्मण आयुर्निर्धारणं, पुराणं पञ्चलक्षणं सर्गप्रतिसर्गप्रलयवंशमन्वन्तरवंशानुचरि-तानां परिचयः,पौराणिकसृष्टिरहस्यं, आर्याणां आदिनिवासस्थानपरिचयः भुवनकोषविवरणं, भूगोलस्य विभाजनं, चतुर्द्वीपायाः सप्तद्वीपायाश्च पृथिव्या परिचयं , जम्बूद्वीपस्य विभाजनं, भारतवर्षस्य विभाजनं भारतवर्षस्य नामकरणं भारतवर्षस्य प्रशस्तिः भारतवर्षस्य वैशिष्ट्यम्,पौराणिका भूगोल-

वर्णनं, भौगोलिकं ऐतिहासिकं च तथ्यं, खगोलचर्चा, सोमसूर्ययो: पौराणिको परिचय:, पर्वतानां विभाजनम्, नदा: नदश्च परिचय: देशानां परिचय: ।

पुराणेषु आयुर्विद्या, राजनीतिविद्या, वर्णाश्रमव्यवस्था, धर्मभेद:, विवाह:, छात्रोपेता विद्यालय, स्त्रीवर्ग, सतीप्रथा शिक्षा, कलाविमर्श:, संगीत-कला, नृत्यकला, आत्मदर्शनस्यावश्यकत्वं, विविधविद्याविलासपरिचय:, इति संक्षेपेण सर्वपुराणानुसारं पुराणानां विषयक्रम: ।

पुराणेषु मानवजातेरारम्भो मनोरेव भवति । मनो: सन्तत्या मनुष्या: मानवा उच्यन्ते। पुराणेषु चतुर्दश मनूनामुल्लेखो विद्यते, किन्तु वंशप्रतिष्ठापनदृष्ट्या द्वावेव मनू उल्लेखनीयो स्त: - प्रथम: स्वायम्भुव मनु:, सप्तमश्च वैवस्वतमनु: । स्वायम्भूवमनु: ब्रह्मणोऽङ्गज: पुत्रोऽस्ति तथा तस्य धर्मपत्नी शतरूपापी ब्रह्मणोऽङ्गजा पुत्री अस्ति । स्वायम्भूवमनो: शतरूपायां प्रियव्रत उत्तानपादश्चेति द्वौ पुत्रौ तथा देवहूति: आकूति: प्रसूतिश्चेति ।

तिस्र: कन्या अजायन्त, मनुना देवर्षिनारदस्यानुमत्या स्वकीये ज्येष्ठ-पुत्रं प्रियव्रतसमस्तस्य भूमण्डलस्य राजानं विधाय च स्वयं विरक्तो भूत्वा तप: कर्तुं वने जगाम । राज्यमवाप्य प्रियव्रत औरसपुत्रवत् प्रजा: पालयन् सकलामिमां शुशास ।

विश्वकर्मणः कन्यया बर्हिष्मत्या सार्कं तस्य विवाहो जातः, यस्यां (१) आग्नीध्रः (२) इध्मजिह्वः ,(३) यज्ञबाहुः, (४) महावीरः, (५) हिरण्यरेताः, (६) घृतपृष्ठः, (७) सवनः ,(८) मेधातिथिः ,(९) वीतिहोत्रः , (१०)कविश्चेति दशपुत्राः ।

तथा ऊर्जस्वती नाम्नी एका कन्या जाता । तेषु त्रयः कवि महावीर सवनाः परमहंसा आसन् । जन्मत एव ते भगवदाराधनायामासक्ता विषयसुखविमुखाः सन्तः राज्यविरक्ता जाताः ।

प्रियव्रतस्य द्वितीयायां भार्यायां त्रयस्तनया अजायन्त —

(१) उत्तमः (२) तामसः (३) रैवतश्च ।

ये क्रमशः तृतीयचतुर्थपञ्चममन्वन्तराणामधिपतयोऽभूवन् । प्रियव्रतेन बहुतिथं कालं पृथिव्याः पालनं कुर्वता- स्वयम्भुजबलेन स्वराज्यतोऽधर्मं दूरीचकार ।

एकदा प्रियव्रतेन राज्ञा निशां दिनं निर्मातुमिच्छया एकस्मिन् ज्योतिर्मये रथे उपविश्य सूर्यस्य पश्चाद् गच्छता पृथिव्याः सप्तपरिक्रमाः कृताः। तस्य रथस्य नेमिभि कृष्टाभ्यां पृथिव्यां सप्तसमुद्राः जातास्तथा तैरेव पृथिव्यां सप्तद्वीपा अपि अजायन्त। तदनन्तरं प्रियव्रतोऽवशिष्टान् सप्त-पुत्रान् सप्तद्वीपाधिपतिनकार्षीत् ।

संग्रामे भारते वृत्ते सहदेवे निपातिते ।
सोमाधिस्तस्य दायादो राजाभूत् स गिरिव्रजे ॥[1]

अतएव प्राचीनभारतीयेतिहासज्ञानाय अन्यासां अपेक्षया पुराणानि अधिकतया प्रामाणिकानि मान्यानि च स्वीक्रियन्ते । यथा यथा अध्येताऽध्येति तथा तथा पुराणेषु वर्णितस्य राजवंशस्य विवरणं सत्यं मन्यते ।

नानापुराणानुसारं पुराणानां वंशावलीषु एकनामकानामपि केषां राज्ञां प्रमाणाय एवं स्थितं विशेषत एवमस्ति यत् तत्परिचये सन्देहो नोपतिष्ठते । यथा-- पुराणानुसारं - नलमरुत्त, परीक्षित, भीमसेन, जनमेजय, चन्द्र, सूर्य प्रभृतिषु राजसु सन्देहनिवारणाय तैः सह तेषां पूर्वजानां सङ्केतोऽपि कृतोऽस्ति यथा --

नलौ द्वावेव विख्यातौ पुराणेषु दृढव्रतौ ।
वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः ॥[2]
नलौ द्वावेव विख्यातौ वंशे कश्यपसम्भवे ।
वीरसेनसुतस्तद्वन् नैषधश्च नराधिपः ॥[3]
द्वावेतौ सोमवंशेऽस्मिन् द्वावेव च परीक्षितौ ।
भीमसेनास्त्रयो विप्रा द्वौ चापि जनमेजयौ ॥[4]
कल्माषस्तु केशिनीर्मिणतस्य चात्मजः ।
अन्यस्त्वविदितो राजा मरुत्तः कथितः पुरा ॥[5]

- - - - - - - - - - - - - - - - - - - -

१- मत्स्यपु० २७०।१९
२- लिङ्गपु० ६६।२४
३- मत्स्यपु० १२।५६
४- हरिवंशपु० १।३२।५
५- वायुपु० ९९।२

अन्यौ तु खलु देवानां सूर्यचन्द्रमसौ मतौ ।
अन्यौ दानवमुख्यानां सूर्याचन्द्रमसौ तथा ॥[१]
अन्यावेतौ दनोः पुत्रौ सूर्याचन्द्रमसौ तथा ।
दिवाकर निशानाथौ तावन्यौ देवपुङ्गवौ ॥[२]

एवं पुराणेषु वंशमन्वन्तर वंशानुचरितानामविस्तरेणामैतिहासिकी प्रवृत्ति स्पष्टा भवति ।

अत: पुराणानां मूलाधार ऐतिहासिकवृत्ते: प्रबल प्रमाणभूता: सन्ति । पुराणद्वारा भारतीयेतिहासस्यान्धकार-एक मौर्यगुप्तवंशानामितिहास: स्पष्टो भवति ।

तेषु सप्तसु आग्नीध्रो जम्बूद्वीपस्य, मेधातिथि, प्लक्षद्वीपस्य, वपुष्मान्, शाल्मलीद्वीपस्य, ज्योतिष्मान् कुशद्वीपस्य, द्युतिमान् क्रौञ्चद्वीपस्य, भव्य: शाकद्वीपस्य, सवनश्च पुष्करद्वीपस्याधिपतिर्बभूव ।

प्रियव्रत स्वयं: कन्याया ऊर्जस्वत्याया विवाहं शुक्राचार्येण सहं कृतवान्, येन देवयानि: समुत्पन्ना यस्या पाणिग्रहणं राजा ययातिना सहाभवत् ।

- - - - - - - - - - - - - - - - -

१- म०भा० आ० प० ६५।२७

२- कालिकापु० ३५।५८

एवं प्रियव्रतेन व्यवस्थां विधाय विभाज्य पुत्रेभ्यो विमुक्तीभूय देवर्षि-नारदस्योपदेशानुसारं वनमुपव्रज्य तीव्रतपस्याद्वारा भगवल्लोकस्य प्राप्तिः कृता ।

प्रियव्रत कृतं कर्म को नु कुर्याद् विनेश्वरम् ।
यो नेमिनिम्नैरकरोच्छायां घ्नन्, सप्त वारिधीन् ॥
भूः संस्थानं कृतं येन सरिद् गिरिवनादिभिः ।[1]
सीमा च भूतनिर्वृत्यै द्वीपे विभागशः ॥

पितरि प्रियव्रते वनमुपगते आग्नीध्रो जम्बूद्वीपस्य प्रजाः पुत्रवत् पालयन् पूर्वचित्तिनाम्ना अप्सरसो गर्भात् नाभि किंपुरुष हरिवर्ष इलावृत, रम्यक, हिरण्मय कुरु, भद्राश्व, केतुमाल नाम्नो नव पुत्रानुत्पादयामास ।

तदनन्तरं स पृथिव्या नव खण्डानि विधाय तन्नामकरणं आत्मनस्तन-यानामभिरेव कृत्वा एकैकं पुत्रमेकैकस्य खण्डस्याधिपतिं चकार । ततः तेऽपि स्वानि स्वानि खण्डानि सम्यक् पालयामासुः ।

परलोकमुपगते आग्नीध्रे नवापि भ्रातरो मेरोः पुत्रीभिः मेरुदेव्यादिभिः सह विवाहं कृतवन्तः । तेषु ज्येष्ठस्य नाभेः भगवतो विष्णोर्यज्ञे कृते मेरुदेवीतः ऋषभदेवस्य विवाह इन्द्रपुत्र्या जयन्त्या सह जातो यतः शतपुत्रा अजायन्त । तत्र सर्वगुणश्रेष्ठो ज्येष्ठो भरत आसीत् । यस्य नाम्नाऽस्य खण्डस्य नाम भारतवर्षं जातम् ।

- - - - - - - - - - - - - - - - - - -

१- श्रीमद्भागवतम् ५।१।३९-४०

प्रथममस्य खण्डस्य नामाजनाभमासीत् अतो हि नाभिना तत्पुत्रेण तेन ऋषभदेवेन चास्य खण्डस्य पालनं कृतमासीत्, किन्तु भरत एवास्य देशस्य नाम भारतवर्षमिति जातम् ।

प्रियव्रतकृतं कर्म को नु कुर्याद् विनेश्वरम् ।
यो नेमिनिम्नैरकरोच्छायां घ्नन् सप्तवारिधीन् ॥
भूः संस्थानं कृतं येन सरिद्गिरिवनादिभिः[1] ।
सीमा च भूतनिर्वृत्यै द्वीपे द्वीपे विभागशः ॥

येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद् येनेदं वर्षं भारतमिति व्यपदिशन्ति[2] ।

अजनाभं नाम तद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति ।

भरतस्य पुत्र सुमतिरभूत् यस्य वंशपरम्परायां चतुर्दश नृपानन्तर यशस्वी महाराजो गयो जातः, यं जना भगवतोऽवतारं वदन्ति। तस्य राज्ये पृथिवी प्रजानां सर्वान् मनोरथान् पूरयति स्म । तस्य यज्ञेषु सोमरस निपीय महेन्द्र आनन्दनिमग्नो जातः ।

तस्यानन्यया भक्त्या यज्ञमूर्तिर्भगवान् प्रत्यक्षीभूय तस्य यज्ञस्य फल गृहीतवानासीत् । तस्य वंशपरम्परायां अन्ते राजा विरजो जातो येन प्रियव्रत-स्य वंशो निजकीर्तिभिः सदैवालंकृतो यथा वामनेन देवकुलमलंकृतमासीत् ।

---

१- श्रीमद्भागवतम् ५।१।३९-४०
२- ,, ,, ५।४।९, ५।७।३

स्वायम्भुवमनो द्वितीयस्य पुत्रस्योत्तानपादस्य द्वे भार्ये आस्तां सुरुचिः सुनीतिश्च । तत्पूर्व्यामुत्तमो जातः सुनीत्यां च भक्तराजो ध्रुवः समुत्पन्न आसीत् । बाल्ये एव यदीय तपसा प्रसन्नो भगवन्नारायणो नवीनमेकं ध्रुवलोकं विधाय तत्र तं स्थापितवान् ।

नानापुराणानुसारं वैवस्वतमनुः समस्तस्य संसारस्यादिकारणमस्ति भगवान्नारायणः । तस्य नाभिकमलात् सर्वप्रथम चतुराननो ब्रह्मा आविर्भवति । तस्य मानसो मरीचिः दक्षिणाङ्गुष्ठात् - दक्षश्च प्रादुर्भूतः । दक्षस्य पत्न्यां प्रसूतौ अदितिरुत्पन्ना यस्याः विवाहो मरीचिपुत्रेण कश्यपेन सह जातः । कश्यपाददित्यां भगवान् विवस्वान् सूर्यः समुत्पन्नः ।

अस्य संज्ञानाम्न्या पत्न्यां वैवस्वतमनुः समुत्पन्नो यस्य नामान्तरं श्राद्धदेवमनुरासीत् । प्रथम मनोः काचित् सन्ततिर्नासीत् । पुत्रकामनया तेन महर्षेः वसिष्ठस्याचार्यत्वे मित्रावरुणेष्टेः- पुत्रेष्टियज्ञस्य अनुष्ठानमारब्धं किन्तु मनुपत्न्या श्रद्धया होतारः प्रार्थिता यद् भवद्भिरेवं विधे मन्त्राग्नौ आहुतिः प्रदेया यथा पुत्र्युत्पत्तिः स्यात् ।

तदनुसारं होतृभिः प्रयोगे क्रियमाणे इलानाम्नी कन्या समुत्पन्ना: यां विलोक्य महदाश्चर्यं जातम् । तदनन्तरं तेन पृष्टो महर्षिः वसिष्ठः इलायाः पुनः पुंस्त्वकामनया भगवन्तं विष्णुं प्रार्थितवान् ।

तत्परिणामे इला पुमान् सञ्जाता, यस्य नाम सुद्युम्नोऽभवत् ।
कियद्दिनानन्तरं सुद्युम्न एकस्माच्छार्यं सैनिकै: सह आखेटकं कुर्वन् देवादम्बिका-वने उपस्थित:, तत्रोमाविषयिकाले एव स पुन: स्त्री सञ्जात:, तस्याश्वो वडवा अभूत्, सैनिकाश्च नार्यो जाता:। स्त्रीभूत: सुद्युम्न: लज्जावशात् स्वराजधान्यामगत्वा वने एव वसतिं चकार ।

एकस्मिन् दिने सा भ्रमन्ती चन्द्रसुत आश्रमे उपस्थिता तत्र तत्सुन्दरं रूपं दृष्ट्वा तत्रानुरक्तासीत् । तेन सह गन्धर्वविवाहं कृतवती । अनन्तरं बुधात्तस्यां पुरुरवा नामक: पुत्र उत्पन्न: ।

बुधस्य भवने तिष्ठन्तीला गर्भधराऽभवत् ।[1]
अजीजनत् पुत्रमेकमनेकगुणसंयुतम् ।।

इलात् उत्पन्नमानत्वात् स पुराणेषु एलोऽपि कथ्यते यतश्चन्द्रस्य वंशप्रवर्तकोऽभिमतोऽस्ति । पुन एकदा वनान्तरं यदा इला महर्षिं वसिष्ठं स्मृतवती तदा स तत्रोपस्थाय तस्या: तादृशीं दशां विलोक्य दयाकुलया भगवत: शिवस्याराधनां कृत्वा तं तोषयामास । ततस्तेन वरो दत्तो यदसौ शिष्य एकमासपर्यन्तं पुरुष: स्थास्यति, तदेकमासं यावत् स्त्री भविष्यति ।

- - - - - - - - - - - - - - - - - -

१- मत्स्यपु० १२।१३

मासं पुमान स भविता मासं स्त्रीस्तव गोत्रजः ।
इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥[1]

तदनन्तरं वसिष्ठेन गुरुणा पुत्रेण पुरुरवसा च सह स्वां राजधानीमागत्य सुद्युम्नो व्यवस्थयाऽनया स्त्रीत्वे गृहे तिष्ठन् पुंस्त्वे च पृथ्वीपालनं कुर्वन् समयं यापयामास । पर प्रजा वैकृतेनाऽभिरतीयेन राज्ञा प्रसन्नाऽभवत् ।

आचार्यानुग्रहात् कामं लब्ध्वा पुंस्त्वं व्यवस्थया ।
पालयामास जगतीं नाभ्यनन्दन् स्म तं प्रजाः ॥[2]

स्त्रीत्वे तिष्ठति हर्म्येषु पुंस्त्वे राज्यं प्रशास्ति च ।[3]
प्रजास्तस्मिन् समुद्विग्ना नाभ्यनन्दन् महीपतिम् ॥

सुद्युम्नस्य राजधानी प्रतिष्ठानपुरे आसीत् । पुरुषावस्थायां सुद्युम्नस्य त्रयस्तनया अभूवन् ।

प्रथमः – गयः
द्वितीयः – उत्कलः
तृतीयः – हरिताश्वश्च ।

गयेन गया नाम्नी नगरी निर्माय तत्र स्वकीयं राज्यशासनं कृतम् । उत्कलेन स्वनाम्ना उत्कलप्रदेशं स्थापयित्वा तत्र राज्यस्थापनं कृतम् । हरिताश्वेन च पूर्वस्यां दिशि स्वकीयं शासनं कृतम् –

- - - - - - - - - - - - - - - -

१– श्रीमद्भागवतम् ९।१।३९
२– ,, ,, १०।४।१७
३– देवीभागवतम् १।१२।३५

सुद्युम्नस्य तु दायादास्त्रयः परमधार्मिकाः ।
उत्कलश्च गयश्चैव हरिताश्वस्तथैव च ॥
उत्कलस्योत्कलानाम गयस्य तु गया मता ।
हरिताश्वस्य दिक्पूर्वा विश्रुता कुरुभिः सह[१] ॥

सुद्युम्नो यदा वृद्धो जातस्तदा स्वकीयाय ज्येष्ठपुत्राय पुरूरवसे राज्यं दत्वा तपोवनं जगाम । तदनन्तरं स इलागर्भसम्भवो धर्मिष्ठो बुधपुत्रः पुरूरवा धर्मेण प्रजाः पालयन् सप्तद्वीपवतीं पृथिवीं सम्यक् शशास ।

सुद्युम्ने तपस्तप्तुं वनमुपगते वैवस्वतेन मनुना पुत्रप्राप्तिकामनया शतवर्षं पर्यन्तं यमुनातटे भगवत आराधना कृता फलस्वरूप तस्य दश पुत्रा अभूवन् --

| | | |
|---|---|---|
| १- | इक्ष्वाकु | ६- करूषः |
| २- | नृगः | ७- नरिष्यन्तः |
| ३- | शर्यातिः | ८- पृषध्रः |
| ४- | दिष्टः | ९- नभगः |
| ५- | धृष्टः | १०- कविश्च । |

एभिर्दशभिर्मनुपुत्रैः भारतवर्षस्य विभिन्नप्रदेशेषु स्वं स्वमुपनिवेशं निर्माय तत्र धर्मपूर्वकं स्वकीयं राज्यं स्थापितम् ।

- - - - - - - - - - - - - - - - - - - - -

१- मत्स्यपुराण १२।१५-१६

ततो मनुः श्राद्धदेवः कारयामास भारत ।
श्रद्धायां जनयामास दशपुत्रान् स आत्मवान् ॥[1]

मनोः प्रथमः पुत्र इक्ष्वाकुर्मध्यप्रदेशस्य शासक आसीत् । परमस्य राजधानी अयोध्यैवासीत् या भारतीयसंस्कृते धर्मस्य च प्रमुखं केन्द्रमासीत् --

इक्ष्वाकोर्ज्येष्ठदायादो मध्यदेशमवाप्तवान् ।[2]

द्वितीयो मनुपुत्रो नृगो मधुराप्रदेशं प्रशशास, यस्य पुत्रः पुरतिरासीत् ।

मनोः तृतीयःपुत्रः शर्यातिः वैदिककर्मकाण्डस्य महान् ज्ञाता आसीत्, तस्य आनर्तनामकः पुत्रः उत्पन्नः तथा सुकन्या नाम्नी कन्या समजायत, यस्या विवाहस्तेन महर्षिणा च्यवनेन सह कृतः ।स्वनाम्नः पुत्रस्यानर्तस्य नाम्ना स्वप्रदेशस्य च नाम आनर्त (सौराष्ट्र) कृतम् । आनर्तपुत्रेण रेवतेन कुशस्थल्यां स्थित्वा आनर्त शासनं कृतम् ।

आनर्तो विषये यस्य पुरी चापि कुशस्थली ।[3]

रेवतस्य शतपुत्रेषु ककुद्मी ज्येष्ठः सर्वगुणश्रेष्ठ आसीत् ,रेवतस्य पुत्र्या रेवत्या सह बलभद्रस्य विवाहो जात आसीत् ।

- - - - - - - - - - - - - - - - - -

१- मत्स्यपुराण १२।१५

२- ,, १२।१६

३- वायुपुराण- ८८।२४

मनोः चतुर्थपुत्रेण दिष्टेन विशाल्यां स्ववंशस्य स्थापना कृता, तस्य वंशपरम्परायां मरुत्तनामकः चक्रवर्ती राजा जातो यस्य विषये कथ्यते यत् मरुत्तस्य यादृशः यज्ञो जातो न तादृशः पृथिव्यां कस्यापि जातः । तत्र सर्वाणि यज्ञियवस्तूनि स्वर्णमयानि आसन् । तत्र यज्ञे इन्द्रः सोमरसेन तृप्तः ब्राह्मणाश्च दक्षिणादिभिः प्रसन्ना मरुद्गणाः परिवेषकाः देवगणाश्च सदस्या आसन् । तस्यैव कुलयोगेनाग्नेरंशोर्ण जातं यस्य प्रतापमहीन स्थाप्-वनं दग्ध्वा कृतम् ।

तस्य वंशे तृणबिन्दोः पुत्रो विशालो जातो येन विशाला नाम्नी नगरी निर्मिता । विशालवंशीय नरेशानां सम्बन्धे प्रसिद्धिरस्ति यत् तृणबिन्दु-प्रसादेन विशालवंशीया राजानो दीर्घायुषो महात्मानो वीर्यवन्तो धर्मपरा-यणाश्चासन् --

तृणबिन्दुप्रसादेन सर्वे वैशालिका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः[1]।।

पञ्चम मनुपुत्रेण पञ्चमेन धृष्टेन पञ्चनदप्रान्तः स्वाधिकारे नीतः। तस्मादेव धार्ष्टनामका क्षत्रिया उत्पन्ना ये ब्राह्मणतुल्या आसन् ।तस्यैव वंशे अग्निवेशः समुत्पन्नः य आयुर्वेदस्य ज्ञातासीत् ।

- - - - - - - - - - - - - - - - - - -

१- वायुपुराण ८६। २२

षष्ठेन मनुपुत्रेण करूषेण विहारप्रान्तस्य दक्षिणपश्चिमे रीवाँ-राज्यतः पूर्वस्यां सोनभद्रतटे स्वं राज्यं स्थापितम् । करूषतः कारूषनामको महाबलोपराक्रमशाली योद्धा च क्षत्रियगणः समुत्पन्नः ।

मनोः सप्तमपुत्रात् नरिष्यन्तात् चित्रसेनः समुत्पन्नः यस्य सन्ततौ भारतान्यक्षत्रियायां गताः याः अग्निनाम्ना प्रसिद्धाः ।

मनोः अष्टमपुत्रः पृषध्नः स्वगुरोः च्यवनस्याज्ञया गाः पालयति स्म । एकस्मिन् दिने घोरान्धकारे रात्रौ वर्षति मेघे सिंहः गोशालायां प्रविश्य एकां गां जग्राह । अन्धकारेण पृषध्नः सिंहं हन्तुं चिक्षेप किन्तु सिंहभ्रमेण गोः शिरो भिन्नम् । प्रातःकाले दृश्यमिदं दृष्ट्वा रुष्टेन गुरुणा शूद्रत्वाय स शप्तः । तदनन्तरं गुरोः शापं शिरोधार्य स वने गत्वा ब्रह्मचर्यपूर्वकं तपस्यां कुर्वन् ब्रह्मणिलीनः ।

मनोः नवम पुत्रात् न भगात् नाभागस्य जन्मजातं येन सुवर्णदक्षिणे तटे स्वकीयं राज्यं स्थापितम् । नाभागस्य पुत्रो भगवतः परमभक्तोऽम्बरीषो जातः यस्य रक्षाहेतवे भगवता विष्णुना स्वं सुदर्शनं चक्रं नियुक्तम् । चक्रं सदा तस्य रक्षां करोति स्म येन च दुर्वाससः शापो निष्फलोऽभूत् ।

मनोर्दशमः पुत्रः कविः सर्वकनिष्ठो बाल्यावस्थात् एव विरक्तो भूत्वा आत्मज्ञानी जातः । पञ्चदशवर्षवयस्कायामेव स राज्यं त्यक्त्वा वने गत्वा भगवति चित्तं निवेश्य परमपदमाप्तवान् ।

एवं मनोः दशसु पुत्रेषु द्वौ कवि पृषध्रौ विरक्तौ जातौ । अतो न कस्यापि वंशवर्णितः शेषाणां संक्षिप्तं वंशवर्णनं जातम् ।

विभिन्नेषु पुराणेषु न केवलं वैवस्वतमनोः पुत्राणां नामसु एवान्तरं विद्यते, अपितु तेषां संख्यायामपि पार्थक्यं दृश्यते । श्रीमद्भागवते यथा कस्मिंश्चित् पुराणे तस्य दशपुत्राः प्रोक्ताः क्वचित् कुत्रचित् नवैव निर्दिष्टा विद्यन्ते , तथा तेषां नामस्वपि मतभेदो दृष्टिगोचरो भवति[1] । श्रीमद्भागवत-पुराणयोरिष्टस्य नाम नोट्टङ्कितमस्ति ।

कूर्मपुराणे नाभागस्यापूर्तिः कृताऽस्ति । वायुपुराणे नहुषेण संख्यापूर्तिः कृता विद्यते । श्रीमद्भागवते नृग दिष्ट, नभग, कवयो, भिन्नाः प्रोक्ताः वर्तन्ते । यत्र नभग एव नाभागः स्वीक्रियेत तर्हि तद्भिन्नं नास्ति । अग्निपुराणे नाभागादिष्टमेकमेव नामानुमीयते, यतो अत्र नाभागः पृथगेवो-क्तोऽस्ति ।

यदि तत्र नाभागादिष्टमेकमेवाङ्गीक्रियते तर्हि तत्र प्रांशुः विशेषणं स्यात्, परन्तु प्रांशु प्रांशोरुल्लेखो यद्यपि विद्यते। यदि तथापि प्रांशुविशेषणं मन्येत् तर्हि संख्यापूर्त्यै नहुषस्यापि तत्रास्तित्वमवश्यं सम्भवेत्[2] ।

- - - - - - - - - - - - - - - -

१- वायुपुराण ८५।२, श्रीमद्भागवत् ९।२।६, १६ ।

२- मत्स्यपुराण ११।४०-४१, वायुपु० ८५।३-४,कूर्मपु० पूर्वार्द्ध २०।४-५ अग्निपुराण ७२।५-६ ।

इत्थं इक्ष्वाकु धृष्टनरिष्यन्त शर्याति, करूष, पृषध्र, नाभागेषु, नामसु नास्ति विशेषो मतभेदः, सर्वेषु पुराणेषु इमानि नामानि प्रायः समानानि मिलन्ति, किन्तु शेषेषु वर्तते विवादः ।

(१) एवं श्रीमद्भागवतमहापुराणे वैवस्वतो मनोः दशपुत्रान् इलेता-नाम्नीं एकां कन्यकाञ्च मनुते ।

(२) पद्मपुराणं मत्स्यपुराणञ्च मनोर्दशैव पुत्रान् स्वीकुरुतः परन्तु वायु० कूर्मपुराणानि च मनोर्नवैव पुत्रानङ्गीकुर्वन्ति तथा तदतिरिक्तामिलाना-म्नी मेकां कन्यकाञ्च कथयन्ति ।

एकदा वैवस्वतमनोः छिक्कासमये तन्नासिकायाः इक्ष्वाकुरभिनिःसृतः यस्य शतं पुत्रा जाता ये परमधार्मिका महादानिनश्चासन् । तेषु विकुक्षिः निमिदण्डकश्चेति त्रयः अतिविख्याता आसन्[1] ।

इक्ष्वाकोर्ज्येष्ठपुत्रो विकुक्षिर्मेरोरुत्तरप्रदेशः स्वाधिकार कृतः । तद्वंशजाश्च मेरोर्दक्षिणे भागे स्वशासनं स्थापितवन्तः ।

निमिना पूर्वोत्तरबिहार प्रान्ते विदेहकुलस्य स्थापनं कृतं, एतद्वंशीये-नैव राजा मिथिला स्वराजधानी कृता। अतस्याः सर्वे राजानो जनकाः कथ्यन्ते। सर्वे चाध्यात्मविद्याविशारदा भवन्ति।

- - - - - - - - - - - - - - - - - - -

१- वायुपुराण ८८ । ८

दण्डकेन दक्षिणारण्येषु अधिकारः कृतः। अनन्तरं तन्नाम्ना तद् दण्डकारण्यमुच्यते ।

एवमिक्ष्वाकोः शतपुत्रेषु पञ्चाशद् उत्तरखण्डस्य शासका जाताः । अष्टचत्वारिंशद् दक्षिणे गताः । एवं विकुक्षेः शतपुत्रेषु पञ्चविंशतिः पूर्वस्य पञ्चविंशतिः पश्चिमस्य, त्रयो मध्यभागस्याधिष्ठिताः ,अष्टाचत्वारिंशद् दक्षिणस्य राजानो जाताः ।

तेषां पुरस्तादभवन्नार्यावर्ते नृपाः नृप ।[६०]
पञ्चविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः।।

विकुक्षेः द्वितीयनाम शशाद आसीद् यतो हि एकदा इक्ष्वाकोरष्टकाश्राद्धार्थं यज्ञीयपशोरन्वेषणाय वनंगतः क्षुधापीडितो व्याकुलीभूय स यज्ञीयं पशुं शशं भक्षितवान् । अयं महान् प्रतापी एवं धार्मिकश्च राजा बभूव ।

एकदा देवासुरसंग्रामे तेन इन्द्रं वृषभं कृत्वा तस्य ककुदि उपविश्य दैत्यानां पुराणि जितानि, अतोऽयं पुरञ्जयः इन्द्रवाहः ककुत्स्थोऽपि कथ० कथ्यते । अस्यैव वंशपरम्परायां युवनाश्वस्य पुत्रो मान्धाता चक्रवर्ती राजा बभूव, स एकाकी एव समस्तां महीं शशास । स विष्णोरंश आसीत्, यस्य पञ्चाशत् कन्यकानां विवाहः सौभरिणा महर्षिणा सह जातः ।

- - - - - - - - - - - - - - - - - - - -

६० श्रीमद्भागवत ९।६। ५

मान्धाता यौवनाश्वो वै त्रैलोक्यविजयी नृपः ।
मान्धाता यौवनाश्वो वै त्रैलोक्य विजयी नृपः ।
अत्राप्युदाहरन्तीमौ श्लोकौ पौराणिका द्विजाः।
यावत् सूर्य उदेतिस्म यावच्च प्रतिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ।
यौवनाश्वं महात्मानं यज्वानममितौजसम् ।
मान्धाता तु तनुर्विष्णोः पुराणज्ञाः प्रचक्षते[1] ।।

मान्धातुः पुत्रो मुचुकुन्दोऽभूत् ।ततोऽनरण्यो यस्य वंशपरम्परायां त्रिशङ्कुरुत्पन्नः,यो ब्राह्मणकन्यापहरणात् स्व पित्रा चाण्डालत्वाय शप्तः। तदनुसारं स चाण्डालो जातः, विश्वामित्रः स्वतपोबलेन तं शरीरं स्वर्गं प्रेषयितुमियेष, परं देवैः सः ततोऽधः पातितः तदा विश्वामित्रेण स आकाशे स्थापितः । तत्कालादद्यापि त्रिशङ्कुरधः शिरा अन्तराले स्वावलम्बते । त्रिशङ्कुरिति नामकरणन्तु एवं क्रियते --

पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ।
अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः[2]।।

- - - - - - - - - - - - - - - - - - - - -

१- वायुपुराण ८८। ६७-६९
२- ,, ,, ८८। १०८

त्रिशंको पुत्रो हरिश्चन्द्रो जातो यस्य सत्यस्य परीक्षा विश्वामित्रेण मुनिना कृता । परिणामतो राजा हरिश्चन्द्रः काश्यां स्त्रीपुत्रसहितो विक्रीतः चाण्डालस्य दासः सन् श्मशाने मृतकानां कर्पटचयने नियुक्तः, किन्तु तेन सत्यं न त्यक्तं, देवैः सह प्रसन्नो भूत्वा विश्वामित्रस्तस्मै ज्ञानस्योपदेशो दत्तो यस्य प्रभावेण स सपरिवारः ब्रह्मलोकं गतवान् ।

हरिश्चन्द्रपुत्रस्य रोहितस्य वंशपरम्परायां बाहुकस्य पुत्रो राजा सगरो जातः । विमातृभिः सापत्न्यद्वेषवशात् गर्भस्थितायां यस्य मात्रे भोजनेन साकं विषप्रदत्तं तेन विषेण साकमुत्पन्नत्वादस्य नाम सगरो जातः ।

सगरः चक्रवर्ती राजासीत् । और्वस्य ऋषेरादेशाद् राजा सगरेणाश्वमेधनामकं यज्ञं कर्तुमारब्धम् । एतस्मिन् यज्ञे इन्द्रेणास्याश्वमेधीयमश्वमपहृत्य गङ्गासागरे तपस्यतः कपिलमुनेः पार्श्वे बद्धः । पितुराज्ञया षष्ठिसहस्रैः सगरप्रजारूपैः पुत्रैः तदश्वमेधीयमश्वं मार्गमाणैः पृथ्वी खनिताया सागररूपेण परिणता ।

कपिलस्य मुनेराश्रमे बद्धमश्वं विलोक्य तेषां कोलाहलेन कपिलस्य ध्यानभङ्गः, तदा तस्य क्रोधाग्निना तत्कालमेव ते सगरपुत्राः भस्मसाज्जाताः ।

विष्णुपुराण, ब्रह्माण्डपुराण, गरुडपुराण,श्रीमद्भागवतेषु जातमस्ति ।
गरुडपुराणश्रीमद्भागवतयोः कलिराजवंश वर्णनमतिसंक्षिप्तं वर्तते तथा मत्स्य-पुराण, वायुपुराण,भविष्यपुराणेषु प्रामाणिकतया विस्तृतं विवरणं विद्यते।

पौराणिकराजवंशसंकेते प्रायः तेष्वेव राजसु दृष्टयो दत्ता सन्ति, ये मगधकेन्द्रात् देशस्यास्य शासनं कुर्वन्ति स्म, आहोस्विद् मगधराज-राजनीत्या सम्बद्धा आसन् ।

श्रीमद्भागवते द्वादशस्कन्धस्य प्रथमाध्याये केवलं २-४२ श्लोकद्वारा संक्षेपेण भविष्यद् राजवंशस्य विवरणं उपस्थापितं वर्तते ।

वायुपुराणे ९९ अध्यायस्य २७१-४५२ श्लोकेषु भविष्यद्राजवंशस्य वर्णनं सविस्तरं प्रदत्तमस्ति ।

मत्स्यपुराणस्य त्रिषु २७०-२७२ अध्यायेषु भविष्यद् राजवंशस्य वर्णनप्रसङ्गोऽस्ति ।

ब्रह्माण्डपुराणे ३।७४।१६०-२७० भविष्यद्राजवंशस्य वर्णनमस्ति ।

भविष्यपुराणे १२।१।२२-३८ पर्यन्तं भाविनां राज्ञां विवरणं विद्यते ।

गरुडपुराणे एकस्मिन्नेवाध्याये १४१ भविष्यद्राजवंशविवरणं वर्तते ।

विष्णुपुराणे चतुर्थस्यांशस्य चतुर्षु २१-२४ अध्यायेषु भविष्यद्राज-वंशस्य वर्णनप्रसङ्गे महाभारतोत्तरकाले उत्पन्नानां तद्वंशीयानां राज्ञां याः सूच्यः प्रदत्ताः सन्ति । एकविंशतितमेऽध्याये परीक्षिद्वंशस्य पारम्पर्योऽस्ति । द्वाविंशत्यध्याये इक्ष्वाकुवंशीयो बृहद्बलवंशो वर्णितोऽस्ति । त्रयोविंशत्यध्याये बृहद्रथवंशीय राजसु प्रकाशो दत्तोऽस्ति । चतुर्विंशत्यध्याये प्रद्योतवंश, शिशुनागवंश, नन्दवंश, मौर्यवंश, शुङ्गवंश आन्ध्रवंश आभीर, गर्दभिल्ल, शकयवन, तुर्क, गरुण्ड-मौनजातीयानां राज्ञां विवरणं प्रदत्तमस्ति ।

पुराणेषु भविष्यद्राजवंशानां या सूचीप्राप्यते सा समाना नास्ति। कियत्सु स्थलेषु नामानि भिन्नानि उपलभ्यन्ते । कियतां शासनकालेऽपि अन्तर-मस्ति । यथा वायुपुराणे ९९।[illegible], आन्ध्रवंशीय नरेशानां शासनकालं ४५६ वर्षाणि उक्तानि तर्हि मत्स्यपुराणे (२७२।१६) ४६० वर्षाणि उक्तानि किन्तु सर्वमतेन मौर्यवंशस्य शासनकालः १३७ वर्षाणि सन्ति ।

यद्यपि आन्ध्रवंशीय नरेशानां संख्या विभिन्नपुराणेषु भिन्नाभिन्ना-ऽस्ति तथापि एषामैतिहासिक ज्ञाने पुराणेभ्यो महान् सहयोगो मिलति । यथा यथा समयो व्यत्येति तथा तथा एषां वर्णनं प्रामाणिकं सिद्ध्यति । दुर्भाग्यानया पौराणिकराजवंशोऽपीतिहासस्य एवं प्रोतो मन्यते । अतः गम्भीरतापूर्वकं पुराणानुशीलनमैतिहासिकदृष्ट्या अत्यावश्यकमनिवार्यञ्च विद्यते ।

यदि तत्पुराणप्रतिपादितानां वंशावलीनां तुलनात्मकमध्ययनं क्रियते तर्हि परस्परमतद्वन्द्वं प्राप्यते । यथा वायुपुराणे[1] मत्स्यपुराणयोः[2] राज्ञः परीक्षितो महापद्मस्याभिषेकपर्यन्तं १०५० वर्षाणि उक्तानि ।

विष्णुपुराणे[3] लिखितमस्ति यत् परीक्षितो जन्मतो नन्दाभिषेकपर्यन्तं १५०० वर्षाणि समयो ज्ञेयः । श्रीमद्भागवते च ११९५ वर्षाणि कथितानि सन्ति ।

परीक्षितो जन्मसमये सप्तर्षयो मघानक्षत्रे आसन् । ते प्रत्येकनक्षत्रे शतवर्षपर्यन्तं निवसन्ति। यथा च विष्णुपुराणे वैवस्वतमनोरारभ्य महाभारतकालीन बृहद्बलपर्यन्तं ९२ वायुपुराणे ८२ भविष्यपुराणे ९१ श्रीमद्भागवते ८८ राज्ञां परम्परा भवन्ति ।

अत इत्थं वक्तुं शक्यते यत् प्रत्येकपुराणेषु यद्वंशवर्णनं विद्यते तद्वंशानुक्रमतो नास्ति ।अपितु क्वचित् प्रसिद्धप्रसिद्धानां राज्ञां नामावलीमात्रमस्ति तथा क्वचनवंशानुक्रमस्यैव उल्लेखोऽस्ति ।

अपि च महाभारतस्य शान्तिपर्वणि मोक्षधर्मे धर्मराजं प्रति भीष्मपितामहेन नारदाराधनात् महर्षीणां मुक्तिं निर्देशपूर्वकं च तत्पुराणागतये उपदेशो दत्तः ।

- - - - - - - - - - - - - - - - - - -

१- वायुपुराण ९९।४१५

२- म० पुराण २७२।३५

३- वि०पुराण ४।२४।१०४

किन्चानादिर्भगवान् विष्णुरेवास्ति परं ब्रह्म परमं च धाम, तं प्राप्य प्राणिनः कालतोमुक्ताः सन्तो मोदं लभन्ते नूनम् --

समाराध्य गोविन्दं गता मुक्तिं महर्षयः ।
तस्मात्त्वमपि पूजयैनं कृष्णं देवकिनन्दनम्[1] ।।

तद्ब्रह्मपरमं प्रोक्तं तद्धाम परमं पदम् ।
तद् गत्वा कालविषयाद् विमुक्ता मोक्षमाश्रिताः[2] ।।

शिवपुराणानुसारं तु निष्कामकर्मणा भगवति भक्तिर्भवति, भक्त्या च ज्ञानसूर्यस्योदयान्मुक्तिर्भवतीति निश्चप्रचम् ।

कर्मणा जायते भक्तिर्भक्त्या ज्ञानं प्रजायते ।
ज्ञानात् प्रजायते मुक्तिरिति शास्त्रेषु निर्णयः[3] ।।

अतः पुराणेतिहासयोर्भारतीयदर्शनविषयकविवेचनीय तत्वानां उपलब्धौ न काचिदस्ति क्षतिः ।

यद्यपि तत्तत्पुराणेषु साम्प्रदायिकभावनया क्रोतिमिति, यथा शिवपुराणे शिवः विष्णुब्रह्मणोः स्रष्टा, विष्णुपुराणे विष्णुः शिवब्रह्मणोः निर्माता, ब्रह्मपुराणे ब्रह्मैव तयोः कर्ता । देवीभागवते भगवती आद्याशक्तिः ब्रह्म-विष्णुमहेशानां प्रसविनी, सूर्यपुराणे च सूर्यस्यैव सर्वतिविस्तुत्यं दृश्यते ।

- - - - - - - - - - - - - -

१- म०भा०शा० प० २०७।४६
२- ,, ,, ,, २०८।२८
३- शिवपुराण ३ ई० ५१।१०

किञ्च बहुषु स्थलेषु कथास्वपि परस्परं भेदो दृश्यते येन अष्टादशपुराणानां व्यासकर्तृत्वं न प्रतिभाति । तथापि कल्पभेदात् भेदस्य - व्यवस्थाया निर्वाहात् न कापि विप्रतिपत्तिः सम्भवति ।

यथाह स्कन्दपुराणे सृष्टिखण्डे -

अष्टादशपुराणेषु दशभिर्गीयते शिवः ।
चतुर्भिर्भगवान् ब्रह्मा द्वाभ्यां देवी तथा हरिः ॥[१]

यो हि मनुष्यो यस्य देवस्य भक्तो भवति स तस्य देवस्य महत्त्व-प्रकाशकं पुराणं विशेषतः समाद्रियते । भवति च तत्र । अष्टादशसु महा-पुराणेषूपपुराणेषु च भिन्नभिन्नसम्प्रदायसम्बन्धित्वेऽपि प्राधान्येन शैव-शाक्तपुराणेषु, अष्टादशानां पुराणानां पाठश्रवणयोः फलस्य वर्णनं सर्वेषां कृते समानमेवास्ति, न तत्र किमपि वैमत्यं विलोक्यते --

अष्टादशपुराणानां नामधेयानि यः पठेत् ।
त्रिसन्ध्यं जपते नित्यं सोऽश्वमेधफलं लभेत् ॥
ये त्वेतानि समस्तानि पुराणानि च जानते ।
भारतं च महाबाहो ! ते सर्वज्ञा मता नृणाम् ॥

अयं भावः यथा काष्ठात् वह्निर्धूमात् परमोत्कर्षेणाङ्गीक्रियते तथैव तमोगुणात् रजोगुणस्तस्माच्च सत्त्वगुणश्रेष्ठोऽभिमतोऽस्ति ।

- - - - - - - - - - - - - - - - - - - -

१- स्कन्दपु०,पु०ख० २४।११

एतदनुसारमेव त्रिदेवेष्वपि हरेरेव श्रेष्ठत्वं वर्णितं भवति । रुद्रो हि तमोगुणप्रधानो ब्रह्मा च रजोगुणमुख्यस्तः, अतस्तयोः क्रमशः आवरणशक्तेर्वि-क्षेपकत्वेन निकृष्टत्वात्ताभ्यां प्राणिनां मुक्त्युपलब्धिरसम्भवा ।

अतः सत्त्वमयशरीराद् भगवतो विष्णोरेव वास्तविकस्य श्रेयसः प्राप्ति-रुक्ता श्रीमद्भागवते --

सत्त्वं रजस्तम इति प्रकृते गुणास्तै -

र्युक्तः परः पुरुष एक इहास्य धत्ते ।

स्थित्यादये हरिविरिञ्चि हरेति संज्ञाः

श्रेयांसि तत्र खलु सत्त्व तनोर्नृणां स्युः ॥[१]

विष्णुपुराणे पराशरमुखे कथनमस्ति यद् यज्ञानुष्ठानाय प्रजापतिना यज्ञस्योत्तमसाधनभूतचातुर्वर्ण्यस्य रचना कृता । ब्रह्मणो मुखात् प्रथमं सत्त्वं प्रधानां प्रजा उत्पन्ना, तदनन्तरं वक्षःस्थलात् रजःप्रधाना, तदनु उरुभ्यः उभय-प्रधाना तथा पश्चाद् ताभ्यां पद्भ्यां तमः प्रधाना सृष्टवान् । एवमेते क्रमशो ब्राह्मण क्षत्रिय, वैश्य, शूद्र नाम काश्चत्वारो वर्णा अभवन् ।

एवं ब्राह्मण-क्षत्रिय-वैश्य-शूद्राश्चत्वारो वर्णाः क्रमशो ब्रह्मणो मुख वक्षःस्थल, जानु, पद्भ्यः समुत्पन्नाः --

- - - - - - - - - - - - - - - - - - - - - -

१- भागवत् १।२।१२

ब्राह्मणक्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ।
पादोरुवक्षःस्थलतो मुखतश्च समुद्गताः[1] ॥

यज्ञानुष्ठानाय समुत्पादितैरप्येतैर्वर्णैः क्रमेण यज्ञेन सन्तुष्टमानवानां कल्याणहेतुहेतुश्च ।

पुराणकाले सतीप्रथापि प्रचलितासीत् । रावणि शक्तिविमूढे सति पत्नी सीता वनकान्तारे तथैव पतिं प्राप्तुकामनया चिताकुण्डे तस्यानुगमनं चकार । रावणस्य पुत्रवधू सुलोचना मृतस्य पत्युर्मेघनादस्य चिताग्नौ स्वं शरीरं तत्याज । द्वापरे भगवति श्रीकृष्णे दिवंगते अष्टौ प्रधानपट्टमहिष्यः तच्छरीर-मालिङ्ग्याग्नौ प्रविष्टाः ।

पुराणप्रतिपादितानां धर्माभिप्रविधायकानां समस्तधर्मकृत्यानां चरमोद्देश्यं परमात्मसान्निध्यप्राप्तिरेव विद्यते ।अतः शिक्षा भगवतः प्राप्तये एकमनिवार्यं साधनं प्रशस्तश्च मार्गो विद्यते । शिक्षाया अभावे भक्तिकर्मादि-योगोऽपि शिक्षाविकासस्यैव परिणामः। शिक्षार्जने गुरुकुले ,स्यात् नगरे , ग्रामे गुरुगृहे वा भवेत् परं शिक्षायाः समुपार्जनमत्यावश्यकं विद्यते ।

- - - - - - - - - - - - - - - - -

१- विष्णुपुराण १६ । ६६

पुराणेषु गुरुसेवा अनिवार्या प्रोक्ताऽस्ति । गुरुकुले वेदाध्ययन प्रसङ्गे और्वेणमुनिना प्रोक्तमस्ति यद् गुरुकुलेऽन्तेवासिना शौचाचारव्रतपालन-पूर्वकं गुरुशुश्रूषां कुर्वता स्थिरबुद्ध्यादेव अध्ययनं कर्तव्यम् । पुराणेषु गुरुं प्रति अतिशयोदात्तभावनाया: सार्वत्रिकसम्मान प्रदर्शनस्य चादेशो दत्तोऽस्ति ।

पौराणिकयुगे पाठ्यसाहित्यमासीत् वेद-वेदाङ्ग,धर्मशास्त्र,धनुर्वेदादि । मैत्रेयेण विष्णुपुराणे स्वीकृतमस्ति यन्मया वेदाङ्गधर्मशास्त्राणि अधीतानि आसन् । तथा च पौराणिककाले षड्वेदाङ्गानि,छन्द: कल्प:,ज्योतिषम्, निरुक्तम्, शिक्षा,व्याकरणम् । चत्वारो वेदा: मीमांसा,न्याय पुराणं, धर्मशास्त्रं आयुर्वेद:,धनुर्वेद: गान्धर्ववेद:,अर्थशास्त्रम् एता अष्टादश विद्या: प्रख्याता आसन् तथा च विष्णुपुराणे --

अङ्गानिवेदाश्चत्वारो मीमांसान्याय विस्तर: ।
पुराणं धर्मशास्त्रञ्च विद्याश्चैताश्चतुर्दश: ॥
आयुर्वेदोधनुर्वेदो गान्धर्वश्चैव ते त्रय: ।
अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव ता:[१]॥

पुराणकाले च देशस्यार्थिकी दशा सर्वतोभावेन समुन्नता सन्तोष-जनिका चासीत्। पुराणेषु अर्थोपार्जनं धर्माचरणार्थकं प्रधानमुपकरणमासीत् ।

- - - - - - - - - - - - - - - - - - -

१- विष्णुपुराण - ३।६। २८-२९

अत एव धर्मार्थकामाय विष्णोराधना धर्मविधेया निर्दिष्टाऽस्ति ।चतुर्वि-पुरुषार्थेषु धर्मार्थकामान्यतमं पुरुषार्थं मत्वा स्व-स्वरुचिवैभिन्यानुसारं तान्त्रिकार्थमर्थार्थिनां धर्मकृत्योक्तार्थं स्वीकृतम् ।

पुराणानि हि सन्ति भारतीय संस्कृतेः प्रतीकानि । अतिप्राचीन-कालतः प्रवर्तन्तोऽषु पौराणिकवृत्तिषु तत्कालीनसंस्कृतेर्दर्शनं भवति ।अतः पुराणानां समस्तानिवृत्तानि भारतीय संस्कृतेः प्रतिनिधित्वं कुर्वन्ति । भारतीय संस्कृतेः सर्वातिशायी आध्यात्मिकता एव भौतिक कलाविलासेऽपि दृष्टिगोचरतामापाति । यस्यां संस्कृतौ वेदाः प्रादुरभुवन उपवेदा उपनिषदाः वेदाङ्गानि शिक्षाकल्पव्याकरण-निरुक्त-ज्योतिष छन्दोऽभिधानानि निर्मितानि ।

वैज्ञानिककला ग्रन्थाः लिखितः चतुःप्रकारं स्थापत्यं । अष्टधा चिकित्सितम् सप्ताङ्गो धनुर्वेदः, स्वरपदलयावधानात्मकं सङ्गीतम्, चतु-ष्पिरात्मक वाद्यं, लास्यताण्डवनृत्तानुपातिकं नाट्यम्, चतुःषष्टी कलाश्च च सर्वविधाविज्ञानकलापारम्पर्यंप्रादुर्भूतम् । यत्र वा ब्राह्मणारण्यकोपनिषदा-दिसम्वलितः सर्वज्ञानमयो वेदराशिः प्रायेणोपात्ता वरो यस्मिन् देवता-विज्ञानं शक्तिविज्ञानं साधनाभिधानं यज्ञविधानं प्रज्ञानन्दविशेषेण भूयते । उपवेदेभ्यश्च गन्धर्वायुर्वेदस्थापत्येभ्यो भौतिकानां विज्ञानानां कलाकौशलं प्रवर्तितं ।

स्मृतिपुराणोपपुराणेतिहासादीनां प्रणयनञ्च जातम् । किमियतो वैशिष्ट्यमन्यस्यामपि कस्याञ्चित् संस्कृतौ सम्भवति । नहि, अतो भारतीया संस्कृतिरियं अन्याभ्यो लोकसंस्कृतिभ्यो ज्येष्ठा श्रेष्ठा-गरिष्ठा सर्वोत्कृष्टा च चिरकालेऽराजत् । एवं धर्मप्राणायां भारतीयसंस्कृतौ द्वयोरपि भौतिकाध्यात्मिकयोः पक्षयोः महिमा समान एवास्ति ।

पौराणिकनिर्णयानुसारमेकमात्रं भगवन्नारायण एव सर्वोत्कृष्टः कलाकारः सिद्ध्यति यतो हि स्थावरजङ्गमात्मकं निखिलं जगत् तदिच्छा-मात्रेणैवोत्पद्यते, प्रलयकाले च। तत्रैव निलीयते च एवास्ति अतः स्थिति-श्च पालनकर्त्ता तथा कालिकेऽपि तदात्मकमेव - तथाचोक्तम् -

विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थिति संयमकर्ताऽसौ जगतोऽस्य जगच्च सः ।।
(विष्णुपुराण १।१।३५)

---:0:---

:: सात्त्विक-राजस-तामसभेदपरिगणनपूर्वकं
शक्तितत्त्वद्योतक पुराणानां चर्चा ::

- - - - - - - - - - - - - - - - - - - - - - - - - -

शक्तिः स्त्री, शक् + क्तिन् अर्थात् कार्यजननसामर्थ्यम् ।

यथा -

'या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता' ।

इति देवीमाहात्म्यस्य टीकायां नागोजीभट्टः ,शक्यते जेतुमनया । सा प्रभावोत्साहमन्त्रभेदात्त्रिविधा ।

(१) तत्र प्रभुत्वं साधकत्वात् कोषदण्डौ प्रभुशक्तिः ।

(२) विक्रमेण स्वशक्त्या विस्फुरणमुत्साहशक्तिः ।

(३) सन्ध्यादीनां सामादीनाञ्च यथावस्थान मन्त्रशक्तिः ।

सामर्थ्यं मात्रम् ।

तत्पर्यायः -- द्रविणम्, तरः, सहः, बलम्, शौर्य्यम् , स्थामः शुष्मम्, पराक्रमः, प्राणः, इत्यमरः । शुष्म, सहम्, इति शब्दरत्नावली, ऊर्ज्जः इति जटाधरः, कासुः इति, सा तु शर्वलानाम्रम् । इति नानार्थे अमरभरतौ, गौरी इति मेदिनी लक्ष्मीः इति शब्दमाला ।

त्रिशक्तयो यथा :-

एका त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।
एका श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ।।

एकैव रक्ता रजसि वैष्णवी परिकीर्तिता ।
एकैव कृष्णा तमसो रौद्री देवी प्रकीर्तिता ।

एकैक
परमात्मा यथा देवो एक एव त्रिधा स्थितः,
प्रयोजनवशाच्छक्तिरेकैव त्रिविधा भवतु[1] ।।

इति वाराहे त्रिशक्तिमाहात्म्यनामाध्यायः ।

अपि च-

बिन्दुः शिवात्मकस्तत्र बीजशक्त्यात्मकं स्मृतम् ।
तयोर्योगे भवेन्नादस्तेभ्यो जातास्त्रिशक्तयः[2] ।।

अन्यच्च -

इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी ।
त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति[3] ।।

अष्टशक्तयो यथा -

इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्मवादिनी ।
कौमारी नारसिंही च वाराही विकटाकृतिः ।।

---

१- ब्र०पु० २।७।११५-११६ ।
२- क्रियायोगसारः २।२२
३- गोरक्षसंहिता - ४।२८

माहेश्वरी महामाया भैरवी भीमरूपिणी ।
अष्टौ च शक्तयः सर्वा रक्षन्ताः पृथगर्चिता ।।[1]

नवशक्तयो यथा -

तत्र पद्मे चाष्ट दले मध्ये च भक्तिपूर्वकम् ।
वैष्णवीञ्चैव ब्रह्माणीं रौद्रीं माहेश्वरीं तथा ।।
नारसिंहीञ्च वाराहीमिन्द्राणीं कार्त्तिकीं तथा ।
सर्वाभिलक्षरूपाञ्च प्रधानां सर्वमङ्गलाम् ।।
नवशक्तीश्च सम्पूज्य घटे देवांश्च पूजयेत् ।।[2]

पञ्चाशद्विष्णुशक्तयो यथा -

कीर्तिः कान्तस्तुष्टि धृतिः शान्तिः क्रिया दया ।
मेधा हर्षा श्रद्धाख्यालज्जा लक्ष्मी सरस्वती ।।
प्रीती रती रमा प्रोक्ताः क्रमेण स्वरशक्तयः ।
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी ।।
विरजा विजया विश्वा विनदा सुनदा स्मृतिः ।
ऋद्धि समृद्धिः शुद्धिश्च भक्तिर्मुक्तिर्मतिः क्षमा ।।
रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा परा ।
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा ।।
अमोघा विद्युता चेति शक्तयः सर्वकामदाः ।
एता त्रिविक्रमाद्येषु निषण्णाः सस्मिताननाः ।।
विशुद्धामलमानाद्युतयः फुल्लकञ्जा भयवरदाः ।[3]

- - - - - - - - - - - - - - - -

१- पु० ब्रै० पु० १२८। ५१-५३
२- ,, ,, ५६। ८०-८२
३- वि०पु० ८८। ७६-७८ ।

पश्चात् उग्रकल्पो यथा --

गुणोदरी स्याच्छिन्ना शारदाथो वदन्त्यरम् ।
लोलाक्षी वर्तुलाक्षी च दीर्घघोणा समीरिता ।।
सुधादिकुलनागिन्यौ दार्विजिह्वा तथैव च ।
कुण्डोदर्यर्धकेश्यौ च तथा विकृतमुख्यपि । ।
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः ।
सूचीमुखी चैव विद्यामुख्येताः स्वरशक्तयः ।।
महाकालीसरस्वत्यौ सर्वसिद्धिसमन्विते ।
गौरी त्रैलोक्यविद्या स्यान्मन्त्रसिद्धिस्ततः परम् ।।
आत्मशक्तिर्भूतमाता तथा लम्बोदरी स्मृता ।
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी ।।
रूपिणी वीरिणी पश्चात् काकोदर्यपि पूतना ।
स्याद्भद्रकालीयोगिन्यौ शङ्खिनी गर्जिनी तथा ।।

पुराणानां यथा "लोकनया श्रूयते यद् देवानां दानवानां चाभीष्ट-देवौ ब्रह्मा तथा शिवश्चास्ताम् । तौ प्रति तेषां महती निष्ठा चासीत् । समये समये च स्वार्थसिद्धये घोरया तपस्यया" या तौ प्रसाद्य ते ताभ्यां वरं लब्ध्वा महान्तो बलिष्ठाः सन्तः सुरान् बाधन्तेस्म । अधिकांशानां दैत्यानां दानवानामिष्टदेवो ब्रह्मदेवः शिवो वाऽऽसीत् । तयोरुग्रया तपस्यया ते तौ प्रसाद्य विविधं वरं संप्राप्य स्वाभीष्टं साधयन्तिस्म ।

कृष्णो भक्तेषु -- हिरण्यकशिपुः,हिरण्याक्षः,अन्धकः,जालन्धरः, महिषासुरः, नमुचिः, तारकः, कालनेमि प्रभृतयश्चसन् । तथा शिवभक्ते- ष्वाडि-वृत्र-बाणासुराः प्रमुखा आसन् । तेषु नृसिंहेन हिरण्यकशिपोः, वाराहेण हिरण्याक्षः रुद्रेणान्धक-जालन्धरयोः, तारकस्य गुहेन कालनेमेर्ह- नुमता, दुर्गादेव्या महिषासुरस्य, नमुचिबल-वृत्रासुराणामिन्द्रेण,बाणासुरस्य विष्णुना निग्रहो जातः ।

धर्मपुराणानामास्तिकमतानां यदिह जगतीतले चतुरशीतिलक्षयो निषु जन्ममरणपरम्परामनुभूयानेकजन्मार्जितपुण्यपुञ्जप्रभावैर्मनुष्यशरीरमासादयति जीवलोकः कदाचिल्लभते जन्तुर्मनुष्यः पुण्यसञ्चयात् । तदिदमतिदुर्लभं मानशरीर- मवाप्यापि न सर्वे जीवा जन्ममरणपरम्परानुभवदुःखसागरमुत्तर्तुं प्रभवन्ति, किन्तु तत्राधिकतराः पुनरपि तासु चतुरशीतियोनिषु भ्रम्यमाणाः कठिनतरां दुःखपरम्परामनुभवन्तो भूयो भूयो जन्ममरणचक्रे चङ्क्रमन्ते एव । तावद्गति- विधे च वैषम्ये नान्यदुपलभ्यते मूलम् सात्त्विकत्वाधिकतत्वम्, ऋते अनन्यभगवद्भक्ते च। सात्त्विकजन्तौ प्रति अनन्यया भक्त्या भगवन्तं प्राप्य भक्तः संसारे आवागमनचक्राद् विमुक्तः। शाश्वतं सुखमुपलभन्ते । तस्माद् भगवत् प्राप्तिरूप शाश्वतसुखसाधनं शक्तेः भक्तिरेवास्ति ।

यद्यपि 'अपाम सोममृता अभूम'[1] इति श्रुत्या सोमपानादिभिर्कर्मस्य स्वर्गादेरपि सुखावहत्वं प्रतीयते तथापि शान्तिमयजीवनयात्रा निर्वाहाय शक्तेराराधनं अवश्यमेव कर्तव्यम् । शक्तेर्विना संसारे किमपि कार्यमुत्कृष्टं मनुष्य कर्तुं न शक्यते । वेदान्तसिद्धान्तानुसार शक्तेरभेदोपासनाया निरतिशयानन्दरूपं पूर्णसुखस्वरूपं च ब्रह्मसाक्षात् कृत्वैव जीवः सर्वदुःखविनिर्मुक्तो भूत्वा परमानन्दं विन्दते शाश्वतीं च शान्तिं सात्त्विकभक्तिरेव प्रदातुं शक्यते ।

पुराणानामनुसारं शक्तेः भेदोपासनाया परमात्मनः साक्षात्कारं सम्पाद्य जन्ममृत्युबन्धनक्लेशरहितो जीवः सगुणस्य भगवतो नित्यलीलाधाम्नि अप्राकृतेन शरीरेण निवसन् भगवत् सान्निध्यसुखमनुभवन्ति । अतो भगवत्-स्वरूपसाक्षात्कारमन्तरा न किमपि वस्त्वन्यद् भक्तिपोषकस्य वास्तविकं सुखम् ।

'रसो वै सः रसं लब्ध्वा ह्यानन्दी भवति' इति श्रुत्यनुसारं भगवतो रसरूपत्वाद् ब्रह्मानन्दप्रदायिनं शक्तेः सात्त्विकं राजसं भक्तिं रसमेव साक्षात्कृत्य रसरूपस्य भगवतः सान्निध्यमवाप्तुं शक्यते । यथा पदार्थवादिनो न्यायवैशेषिकदर्शने पदार्थज्ञानद्वारा निःश्रेयसपथं प्रदर्शितः योगदर्शनं च नौवेश्वरशक्तेरेकत्वाधिगमपूर्वकं समाधिना कैवल्यप्राप्तिं प्रतिपादयति । सांख्यदर्शनं तु त्रिविधदुःखा-

---

1- बृहदारण्यकोपनिषद्- १।१७

त्यन्तनिवृत्तिमभिलक्ष्य प्रकृतिपुरुषयोर्विवेकात्मकज्ञानेन शक्ते द्वारा मुक्तिमार्ग-मुपदिशति ।

मीमांसादर्शनमपि वैदिकैः पौराणिकैः कर्मभिः संस्कारशुद्ध्या निर्वाणोपलब्धिं निर्दिशति । वेदान्तदर्शनं चाद्वयब्रह्मज्ञानेन शक्ते द्वारा मोक्षाधिगममुद्घोषयति तथैव भगवत् सान्निध्योपलब्धिहेतुभूतं शक्तिदर्शनमपि भगवत्स्वरूपसाक्षात्कारद्वारा अपवर्गद्वारमुद्घाट्य परमपदं प्रापयति भक्तप्रवरान् ।

अतो सात्त्विक-राजस-तामसभेदद्वारा शक्तितत्त्वं मत्वा भगवतो वास्तविकं स्वरूपं विज्ञाय परमपुरुषार्थं निर्वाणपदं प्राप्तुं शक्यते ।

पुराणानुसारं समाधिसुखस्येव शक्तेर्भक्तिसुखस्यापि स्वतन्त्रपुरुषार्थ-त्वात् भक्तियोगोऽपि परमपुरुषार्थोऽभिप्रेतः। अतएव जीवन्मुक्तानाममलात्मनां ज्ञानिनामपि शक्तेरावश्यकत्वेन अनिवार्या प्रतिपादिता ।

तत्पुराणेषु भगवतो शक्तिर्भक्तान् दुःखबहुलादस्मात् संसारात् परमानन्दपूर्णपरिस्थितौ समुपस्थापयितुमेकमात्रं सर्वसुगमं, साधनं निर्दिष्टमस्ति। शक्तितत्त्वस्यास्य प्रतिपादनं तु प्रायः प्रतिपुराणं प्राप्यत एव, तथापि पुराण-मूर्धन्ये सर्ववेदान्तसारे वैष्णवतिलके श्रीमद्भागवते महापुराणे शक्तितत्त्वस्य सर्वाङ्गीणं विश्लेषणं प्रस्तुतमस्ति। तदनुसारं प्रेमपयोधौ पूर्णात्मनि

संस्कृतया भक्त्या: अन्य: कल्याणकारी कश्चन् अन्यो मार्गो न दृष्टिगोचरता-मायाति, तदुक्तं श्रीमद्भागवते --

> न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
> सदृशोऽस्ति शिवपन्था योगिनां ब्रह्मसिद्धये ॥[1]

भक्त्या भक्ते: भक्ति: यावत् पुलकिताङ्गो द्रवीभूतहृदयो विगलितानन्दाश्रुश्च न भवति तावत् आन्तरिकीं पवित्रतां नासादयति । यथा समाधि-द्वारा चेतस: स्वच्छतामधिगमात् मानसिको भावो विकारेभ्य: समूलमपह्रियते, तथैव सात्त्विकवृत्तेर्भक्त्या साकं परमानन्दसंबन्धसत्त्वात् पापराशि प्रणश्यति । तदनन्तरं यथाऽग्निना सुवर्णं निर्मलं सत् स्वकीयं स्वाभाविकं स्वरूपं प्रतिपद्यते, तथैव जीवोऽपि भगवद्भक्तिशक्तया गलितमलिनसंस्कार: सन् नैजं स्वाभाविकं स्वरूपमासाद्य शाश्वतीं शान्तिमनुभवति ।

भक्तितत्त्वस्य प्राप्तये पुराणानुसारं भक्तेर्महत् किमपि साधनं नास्ति, भक्ते: प्रति भक्तितुलायां धर्मार्थकामानां किमपि मूल्यं नास्ति । यदा भक्तिसाधनाद्वारा सर्वश्रेष्ठं परमतत्त्वमपि सर्वतोभावेन साधकस्याधिकारे आगच्छति तदा किं पुनरवशिष्यते । तस्मात् पुराणानां मतेन भक्ति: परमपदप्राप्तये सर्वश्रेष्ठमस्ति भक्तिसाधनम् ।

---

१- श्रीमद्भागवत् ३।२५।१९

धर्मार्थकामैः किं तस्य मुक्तिस्तस्य करे स्थिता ।
समस्तजगतां मूले यस्य भक्तिः स्थिरा त्वयि[1] ॥

सर्वमिदं मानवयोनावेव सम्भवति नान्यत्र । विधातुः सृष्टेर्वैचित्र्याद् मानव एव केवलमेतादृगस्ति यो विचिन्त्य स्वशुभाशुभे विमोक्तुमर्हत्यात्मानं मृत्योः पाशात् । अत एव सृष्टिनिर्माणावसरे ब्रह्मदेवस्य मानवनिर्माणादेव परमः सन्तोषोऽजायत । यथा चोक्तं श्रीमद्भागवते —

सृष्ट्वा पुराणि विविधान्यजयात्मशक्त्या ,
नाना सरीसृपपशून् खगदंशमत्स्यान् ।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः[2] ॥

अतएव सम्प्राप्य मानवं शरीरं नूनं सम्पादनीयमात्मतत्त्वविज्ञानम् । अयमेव परमपुरुषार्थः उत्कृष्टा सिद्धिः, श्रेष्ठा च भक्तिसम्पदमस्ति ।अनेनैव भक्तिद्वारा मानवजन्मनः साफल्यम्, एतेनैव कृतार्थोऽयं लोकः,अमुनैव वसुन्धरा वस्तुतो वसुन्धरा । भक्तेः प्रति सात्त्विकराजसिक अथवा तामसिक भक्तिद्वारा वा मानवजन्म य आत्मज्ञानाय न प्रयतते तस्य महतो हानिर्भवति ।

- - - - - - - - - - - - - - - - - - -

१- विष्णुपुराण १।२०।२७

२- श्रीमद्भागवतम् ११।९।२८

सत्त्वगुणाधिदेवो भगवान् विष्णुर्यदा योगनिद्रानिगूढनेत्रो च भवति तदा रजोगुणाधिदेवो ब्रह्मा तदीयनाभिकमलतो जागृतो भूत्वा प्रादुर्भवति। ततश्च तमोगुणाधिदेवो भगवान महेश्वरस्तयोरेव देहयोरन्तर्हितरूपेण निगूढ-स्तिष्ठति । तस्यामेव दशायां ब्रह्मदेवः सृष्टिचक्रं चालयति । विस्तारयति च । पूर्वकल्पानुसारं नवीनकल्पे योगयुक्तान्तः करणेन ब्रह्मणा यदा धाता यथा-पूर्वमकल्पयत्' । इति ऋग्वेदानुसारं समाधिस्थ बुद्धिप्रभावेण सत्त्वशक्तिसम्पन्ना ऋषीणामन्तःकरणे ध्यानानुगतसमाधिद्वारा श्रवणाद् श्रुतीनां वेदानामा-विर्भावो भवति ।

विचारानुगतशक्तिप्रवाहात् समाधिद्वारा च पूर्वकल्पोपाख्यानानां भावरूपेण सात्त्विकशक्तेः पुराणात्मना प्राकट्यमपि विज्ञानसिद्धमेव । तत्र वेदा यथावच्छब्दद्वारा पुराणानि च भावद्वारेवाऽविर्भावमासादयन्तीति सर्वसिद्धान्त सिद्धः पन्थाः ।

सात्त्विकराजसिकतामसिकशक्तित्रयभेदे तत्रैतावान् भेदो विद्यते, यद् आसुरलोकेषु आसुरिकशक्तेराधिक्यं देवलोकेषु च दैवीशक्तिबाहुल्येनोपलभ्यते । किन्तु मृत्युलोके मानवपिण्डेषु प्रतिकल्पं नवीनायां शक्तिं जायमानायां देवासुरसंग्रामात्मिका विविधाऽलौकिकविचित्रता समुदेति । यद्यपि सप्तसु

अधोलोकेषु असुराणां निवासः सप्तसूर्ध्वलोकेषु च देवानां निवास इति देवासुरयोर्निवासभेदो कथ्यते तथापीमौ द्वावपि देवासुरौ देवसृष्टेरेवान्तर्गतौ भवतः तामसी सृष्टि असुरा अपि देवयोनि विशेषा एव सन्ति । अतः उभयो-रपि पिण्डं देवपिण्डमेवोच्यते । तद्भिन्नमस्ति मानवपिण्डम् राजसभवे अतः एवं सत्यपि त्रिविधा सृष्टी दृष्टिगोचरतामुपयान्ति ।

तत्र पूर्वकालिककर्मानुसारेण कदाचित् दैव्याः सात्त्विकभवे सृष्टेः प्रजायाः, कदाचन आसुर्याः कदाचिच्च राक्षस्याः प्रजायाः आधिक्यं जायते । स्वर्गे पाताले मृत्युलोके च निवासिभिर्जीवैः अलौकिकीं शक्तिं लोकोत्तरमैश्वर्यञ्च दुष्करेण तपसा संसाध्यते। तपो हि अलौकिकीं सात्त्विकीं शक्तिं सञ्चारयति।

सात्त्विकशक्तिसाधनैव तपोबलेनैव विश्वामित्रो ब्रह्मर्षित्वं ध्रुवश्च ध्रुवलोकमवापतुः, संसारे नैवं विधं किञ्चिदपि कार्यं वर्तते, यत् शक्तिसाधनया न सिध्येत । शक्तिसाधना हि साधकोऽसम्भवमपि कार्यं संभवं कर्तुमर्हति । मानवेषु देवेषु दानवेषु असुरेषु च शक्तिसाधना प्रवृत्तिः स्वाभाविकी भवति। शक्तिसाधनानुष्ठानाय इमामेव कर्मभूमि भारतमाश्रयन्ति सर्वे ।

किं बहुना शक्तिबलेनैव ब्रह्मा संसारं सृजति,विष्णुर्विश्वं पालयति, शिवश्चान्ते सर्वं संहरति। पुराणेषु चतुर्धा प्राणिनो वर्णिताः सन्ति असुराः सुराः,पितरो मनुष्याश्च, तत्रादौ शक्तिकामनया दत्तावधाने ब्रह्मणि

यदा प्रथमं तत्र तमोगुणस्याधिक्यमभवत् तदा तस्योरस्योऽसुरा उत्पन्नाः, तेषां मुत्पत्त्यनन्तरं तेन तत् तामसिकं शरीरं परित्यक्तं यत्काले रात्रिरूपेण परिणतम् ।

ततः सात्त्विके शरीरे गृहीते ब्रह्मणो मुखात् सात्त्विकाः सुराः सञ्जाताः, तदनु प्रजापतिना ब्रह्मणा परित्यक्तं तच्छरीरं दिवानिशामध्यवर्तिनी सन्ध्या समभवत् । तद्वारा परित्यक्तं तच्छरीरं ज्योत्स्ना प्रातकाल रूपेण परिणतम् । एवं चतुर्विधप्राणिवर्गस्य सम्बन्धः चतुर्भिः कालविभागैः सञ्जातः ।

ब्रह्मणा निर्मितस्य सात्त्विकराजसिकतामसिकत्रितत्त्वस्वरूपस्य तत्-शक्तिका तेष्वेव कालेषु दृश्यते -- असुराणां सम्बन्धो रात्रितः, सुराणां दिनतः, पितृणां सायंसन्ध्याकालतः मनुष्याणाञ्च प्रातः कालतो विशेषः सम्बन्धोऽस्ति ।

ब्रह्मणा निर्मितस्य स्थावरजङ्गमात्मकस्य जगतः इदं वैशिष्ट्यं विद्यते, यत् पूर्वकाले येषां यः स्वभावः ,यादृशी प्रवृत्तिः, यादृशं च कर्म भवति, तानि सर्वाणि तैः तादृशान्येव प्राप्यन्ते । अतो हिंसा-मृदुता , कठोरता, धर्माधर्मौ सत्यानृतादि सर्वं स्वभावानुसारमेव प्राणिभिः प्राप्यते, तथा तेभ्यो यद्येभ्यः तदेव रोचते च ।

तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्येव ते प्रपद्यन्ते सृज्यमाना पुनः पुनः ।।
हिंस्त्रा हिंस्त्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
तद्भाविता प्रपद्यन्ते तस्मात् तत्तस्य रोचते[1] ।।

किं बहुमुक्तं वदामः यत्र स्वयमनन्ते परात्परे दुर्विभाव्या हि ते

शक्तयः पारा वेदमानिनाम् । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी

ज्ञानबलक्रिया च[2] ।

देवात्मशक्तिं स्वगुणैर्निगूढाम्[3] ।
ऐश्वर्यवचनः शश्च क्तिः पराक्रम एव च ।
तत्स्वरूपा तयोर्दात्री सा शक्तिः परिकीर्तिताः[4] ।।

प्रकृष्ट वाचकः प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्तिता ।।
गुणे सत्वे प्रकृष्टे च प्रशब्दो वर्तते श्रुतः ।
मध्यमे रजसि कृश्च तिशब्दस्तमसि स्मृतः।।
त्रिगुणात्मस्वरूपा या सा च शक्तिसमन्विता ।
प्रधाना सृष्टि करणे प्रकृतिस्तेन कथ्यते ।।
प्रथमे वर्तते प्रश्च कृतिश्च सृष्टिवाचकः ।
सृष्टेरादौ च या देवी प्रकृतिः सा प्रकीर्तिता[5] ।।

- - - - - - - - - - - - - - - - - -

१- विष्णुपुराण- १।५।६०-६१
२- श्वेताश्वतरोपनिषद् -६।८
३- ,, ,, ,, -१।३
४- देवी भा० ६।२।१०
५- ,, ,, ६।१।५- ।

सृजति कानि देवान् विरञ्चिरुद्राव मुख्यान् ।
तैः स्थितिलयकर्मं कारयत्येकपा ।।[1]

एतद्विषयं बृहदृचोपनिषदिमपि इत्थं वर्णितम् —

देवी ह्येकाग्र आसीत् । सैव जगदण्डमसृजत् ...........

तस्या एव ब्रह्मा अजीजनत् । विष्णुरजीजनत् सर्वमजीजनत् ।

सैषा पराशक्तिः ।

स्वरया सह सम्भूय विरिञ्चोऽण्डमजीजनत् सा तु पोष्य, पालयामास तत्लक्ष्म्या सह केशवः संजहार सर्वजगत् सह गौर्या महेश्वरः । न हि रामस्तथा-त्मा च सृष्टिं स्रष्टुं तया विना, तया युक्तः सदात्मा च भगवांस्तेन कथ्यते, स च स्वेच्छामयो देवः, साकारश्च निराकृतिः ।

इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।

तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ।।[2]

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
एकमेवाद्वितीयं यद् ब्रह्मवेदा वदन्ति वै ।
सा किं त्वं वाप्यसौ वा किं सन्देहं विनिवर्तय ।।[4]

सदैकत्वं न भेदोऽस्ति सर्वदैव ममास्य च ।
योऽसौ साहमहं योऽसौ भेदोऽस्ति खलु विभ्रमात् ।।[5]

- - - - - - - - - - - - - - - - - - -

१- देवीभा० ४। ७

२- दुर्गासप्तशती

३- गीता ७।५

४- देवीभा० ३।६।४३

५- ,, ,, ३।६।२

स्वशक्तियोगात् अहं मायायोगात् योगारम्भां गता सर्वस्यान्यस्य मिथ्यात्वादखण्डत्वं मम स्फुटम् ।

समस्तब्रह्माण्डोत्पत्तिपालनसंहारकर्तृभिर्ब्रह्मविष्णुमहेशैः उपसेव्यमाना, कृपारूपा, संसारभयनाशिनी, अनुरागवृद्धिकारिणी, संसारतारिणी स-महाविद्यानाम्ना शक्तिः परमेश्वरी । प्रकृतिर्देवस्य एका वेदाख्या तथा अव्यक्ताख्या एका सा च सृष्ट्यामभिन्नाऽभूवा पुनः महान् बुद्धिर्मनश्चैव पञ्च-भूतानि चेति । सा अपरा एका जीवरूपा परेयं धात्री, चिद्रूपा सा त्वनन्ता अनादिनिधना परा यत्समं तु प्रियं किञ्चिन्नास्ति महात्मनः विष्णोः नारायणस्य महिषी माता सा ब्रह्मणोऽपि ताभ्यामिदं जगत् सर्वं हरिः कुरुते ।

या निर्गुणा शक्तिः सा सदा नित्या व्यापिकाऽविकृता शिवा-शक्तिः योगगम्याऽखिलाधारा तुरीया च संस्थिता ।

तस्यास्तु सात्त्विकी राजसी तामसी क्रमेण महालक्ष्मीः सरस्वती महाकालीति च स्त्रियः तासां त्रिगुणानां शक्तीनां देहाङ्गीकारकारणात् ।

सा च शक्तिः ब्रह्मस्वरूपा च नित्या सनातनी यथात्मा च तथा शक्तिर्यथाऽग्नौ दाहिका स्थिता । तथा शक्तिः एकैव त्रिविधाऽभवत् ।

यत्र परमात्मा देव एक एव त्रिधा स्थित:। प्रयोजनवशात् शक्ति: एकैव त्रिविधाऽभवत् । शक्तिं विना सदाऽहं सर्वं अकम्पक: शक्तियुक्तो यदा देवि शिवोऽहं सर्वकामद: इति शिववचनम् ।

शक्तियुक्तं जपेन्मंत्रं न मन्त्रकेवलं जपेत् ।
सावित्री सहितो ब्रह्मा शिवोऽप्युन्मनन्दिदपि ॥

माया चाविद्या च स्वयमेव भवति तेषां त्रिविधा शुद्धा स्वयं गुणभिन्नाद्भुरे-ष्वपि गुणाभिन्ना समाना ब्रह्मविष्णुशिवरूपिणी, चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यम् ।

शक्तीनां व्यक्तरूप: -- माया, महामाया, मूलप्रकृति, अविद्या, विद्या, अव्यक्त अव्याकृत, कुण्डलिनी, महेश्वरी, आदिशक्ति, आदिमाया, पराशक्ति, परमेश्वरी, जगदीश्वरी, तमस्, अज्ञान शक्तेर्न्या पर्यायवाची नामानि, नवदुर्गा, काली, अष्टलक्ष्मी, नवशक्ति, पराशक्ति, महालक्ष्मी, महासरस्वती, महाकाली, एते शक्तीनां त्रय: प्रधानव्यक्तस्वरूपम् । राधा, रुक्मिणी, लक्ष्मी, तारा, चण्डी ।

शक्तीनां दार्शनिक तत्त्वम्

सम्पूर्ण विश्वे स्थितानां निर्विकारसत्ताया: नाम: शिवोऽस्ति, तस्य शक्तये: अनन्तरूपोऽस्ति तेषां मध्ये चित् शक्ति प्रधानोऽस्ति, चित्, आनन्द, इच्छा, ज्ञान, तथा क्रियाशक्ति ।

पुराणेषु शक्तिनां षट्त्रिंश तत्वं मन्यते, यदा शक्ति चिद्रूपायां स्व कार्यकरोति तदा निर्विशेष एव चिद्रुप अनुभवरूपा भवति । शक्ति - उपासकाऽपि कालः षट्त्रिंशत् तत्वानि मन्यन्ते । सांख्यशास्त्रे पञ्चविंशति तत्वं मन्यन्ते । सांख्यशास्त्रे पुरुषस्योपरि पञ्चकञ्चुकशक्तितत्वं आवरण-रूपेण मन्यते -- यथा - नियतिशक्ति तत्वं, कालतत्वं, रागतत्वं, विद्या-तत्वं तथा कलातत्वञ्च ।

मन्त्रशक्ति मन्त्राः -- यथा :

(१) ऐं सरस्वती बीजाक्षर मन्त्र 'ॐ ऐं सरस्वत्यै नमः ।

(२) ॐ क्लीं कालिकायै नमः ।

(३) ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे ।

(४) ॐ दुं दुर्गायै नमः ।

(५) ॐ ह्रीं नमः ।

यस्या दृष्टो नैव भूमण्डलांशो यस्याकाशो विश्वेन निरोधः यस्याशातं नैव शास्त्रं किमन्ये यस्याकारः सा पराशक्तिरेव । तं विलोक्य महेशानि कुर्यु त्पादनकारणात् शाक्तिनायं मानसिकं स्वभर्तारं प्रकल्पयेत् ।

सर्वव्यापकशक्ति तथा सर्वात्मकता चिति शक्ति पुराणेषु देव आदण्डमस्तके, कामकलेति विज्ञायते तस्या एव ब्रह्म अजीजनत् ,विष्णुरजीजनत्,

रुद्रोऽजीजनत्। सर्वे मरुद्गणा अजीजनन् सर्वं शाक्तमजीजनत्। अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत् किञ्चित् एतत् प्राणिस्थावरजङ्गमं मनुष्यमजीजनत्। सैषा पराशक्तिः। सैषा शाम्भवी विद्या सैव पुनस्त्रयं शरीरत्रयं व्याप्य बहिरन्तरमवभासयन्ती, महात्रिपुरसुन्दरी वै प्रत्यक् चितिः।

सैवात्मा, ततोऽन्यदसत्यमनात्मा अत एषा ब्रह्मसंवित्तिर्भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीयब्रह्मसंवित्तिः। सच्चिदानन्दलहरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति यदस्ति सन्मात्रम्। यद्विभाति चिन्मात्रम्। यत्प्रियमानन्दं तदेतत्सर्वाकारा महात्रिपुरसुन्दरी, त्वं चाहं च सर्वं विश्वं सर्वदेवता। इतरत् सर्वं परं ब्रह्म। पञ्चरूपपरित्यागादस्वरूपप्रहाणतः अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् इति।

प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते। तत्त्वमसीत्येव सम्भाष्यते। अयमात्मा ब्रह्मेति वा ब्रह्मैवाहमस्मीति वा या भाष्यते सैषा षोडशी श्रीविद्या बालाम्बिकेति बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति वा शुकश्यामलेति वा प्रत्यङ्गिरा धूमावती सावित्री सरस्वती ब्रह्मानन्दकलेति। ऋचो अक्षरे परमे व्योमन्, यस्मिन् देवा अधिविश्वे निषेदुः।

कारणत्वेन चिद्रूपतया रजस्सत्वतमगुणैः यथैव वटबीजस्थः प्राकृतो-ऽयं महाद्रुमः ।। आधारत्वतया अद्भुतः कालाग्निरयं ऊर्ध्वगः तथैव निम्नगः सोमः शिवशक्तिपदास्पदः। विपाशचितः समस्तानां शक्तिः इति अभिधीयते ।

आत्मा वा इदमेक एवाग्र आसीत् नान्यत् किञ्चन मिषत्, प्रज्ञा प्रतिष्ठा यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्य-भिसंविशन्ति आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति ।

य एको वर्णः शक्तियोगात् वर्णाननेकान् निहितार्थो दधाति । प्रपञ्चोपशमं शान्तं शिवमद्वैतम् । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह तत्र न सूर्यो भाति न चन्द्रतारकं, न विद्युतो भान्ति कुतोऽयमग्निः । चितेर-प्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धि संवेदनम् ।

चितिशक्तिरपरिणामिन्यप्रतिसंक्रमादर्शितविषया शुद्धा चानन्ता च, अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रति-संक्रान्तेव तद् वृत्तिमनुपतति तस्याश्च । प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनु-कारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते ।

मायाविशिष्ट चितिशक्ति एव मायास्वतन्त्र य: ईश, ईश्वर, महेश्वर, परमेश्वर, भगवान, शिव, परमपुरुष, पुरुषोत्तम, पुराणपुरुष, विष्णु आदि रूपेण तथा ईश्वरी महेश्वरी, परमेश्वरी, दुर्गादेवी, महामाया, महाकाली, शिवा लक्ष्मी, गौरी सीता आदिरूपे च स्वतन्त्र अलौकिक अचिन्त्य स्वप्रभावया सर्वत्र वैकुण्ठ गोलोकादि विशिष्टस्थानेऽपि कार्येषु विराजमानं भवन्ति । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबल क्रिया च क्लेशकर्म विपाकाशयैरपरामृष्ट: पुरुषविशेष ईश्वर: ।

सर्वज्ञता तृप्तिरनादिबोध स्वतन्त्रता नित्यमलुप्तशक्ति: अनन्तशक्ति एव विभोर्विधिज्ञा: षडाहुरङ्गानि महेश्वरस्य, अपाणिपादोऽहमचिन्त्यशक्ति: पश्याम्यचक्षुस शृणोम्य कर्ण: ।

नारायणोपनिषदे -- गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्, ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् । तामग्निवर्णां तपसा ज्वलन्ती वैरोचनी कर्मफलेषु जुष्टां दुर्गादेवीं शरणमहं प्रपद्ये, सुतरसितरसे नमः कात्यायन्यै विद्महे कन्याकुमार्यै धीमहि तन्नो दुर्गि प्रचोदयात्। इति दुर्गाभिव्यक्तवोक्तम् ।

तैत्तिरीयोपनिषत्प्रतिपादित: चिति-शक्ति प्रकृतिरूपेण सम्भूत: आकाशवायु: आदि उत्तरोत्तररूपेण अनन्तसृष्टिमध्ये उत्पन्नमानानां

ईश्वरीयमायाशक्ति एव । मायां तु - प्रकृतिं विद्यान्मायिनं तु महेश्वरं प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् । प्रकृतेर्महांस्ततोऽहंकारः तस्मात् गणश्च षोडशकः तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि । मूलप्रकृतिः न प्रकृतिर्न विकृतिः पुरुषः ।

दृग्दर्शनशक्त्योरेकात्मतेवास्मिता, बुद्धितः परं पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन् कुर्यात्तत्रात्मबुद्धिं मोहेन । प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः, अहंकार विमूढात्मा कर्ताहमिति मन्यते । ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते, यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दन्ति मानवः। पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम् स्वरूपप्रतिष्ठा वा चितिशक्तिरिति । तस्य वाचकः प्रणवः तज्जपस्तदर्थभावनम् , एकाग्रं सम्पद्यते चित्तम् ।

एकस्मिन् भगवति धारयति चित्तम्, तत ईश्वरः स्वाधितल्पकतामेन तमनुगृह्णाति । प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम्, सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलं, स्फुरत्कान्ति विन्यस्तचारुकुण्डलभूषणम्। शङ्खचक्रगदाखड्गशार्ङ्गवलयान्वितम् ।

नहि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति, शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।

किं कारणं ब्रह्म कुतः स्म जाता,

जीवामकेन क्व च सम्प्रतिष्ठाः ।

अधिष्ठिताः केन सुखेतरेषु

वर्तामहे ब्रह्मविदो व्यवस्थाम्[1] ॥

ते ध्यानयोगानुगता देवात्मशक्तिं अपश्यन् स्वगुणैर्निगूढाम् यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः, उद्गीतमेतत् परमं तु ब्रह्म तस्मिंस्त्रयं सुप्रतिष्ठाक्षरञ्च , तं हि देवात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहंप्रपद्ये ।

परास्य शक्तिर्विविधैव श्रूयते -- स्वाभाविकी ज्ञानबलक्रिया चेति। काली कराली, मनोजवा या च सुधूम्रवर्णा, स्फुलिङ्गिनी विश्वरुची च देवीरिति लेलायमाना इति शक्तिसप्तजिह्वा[2] ।

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पति एव एक अधिवासशक्तिः। प्राधान्यमिति या माहुः या शक्तिरिति कथ्यते। या युष्मानपि शक्ता मां नित्यमवष्टभ्याति वर्तते । ताहं यूयं तथैवान्ये यदेवं तत्तु सा शक्ति स्मृता । पुनः व्याप्यते

- - - - - - - - - - - - - - - - - - - - - -

१- केनोपनिषद् १।४

२- मत्स्यपुराण ४।११

तस्यां चराचरमिदं जगत् अणोरणीयसी स्थूलात्स्थूला व्याप्य चराचरा आदित्येन्द्रादि देवोमद् अपनय: मयी शक्ति विभु: एव । सैव सर्वं वेत्ति परमा तस्या नान्योऽस्ति वेदिता ।

स्वे महिम्नि यदि वा न महिम्नि प्रतिष्ठिता:, अस्य जगतो जन्मस्थिति भङ्ग यत: सर्वज्ञात् सर्वशक्ते: कारणात् भवति तद् ब्रह्म । स एव तं वेत्ति तस्या परमा नान्योऽस्ति वेदिता च ।

सा शाक्तिकीशक्ति उद्यद् भानु सहस्रकान्ति मरुणक्षौमां शिरोमालिकां रक्त लिप्तपयोधरां जपवटीं विद्यां वरं च अभीतिं, हस्ताब्जैर्दधतीं त्रिनेत्रविलसद् वक्त्रारविन्दश्रियं देवीं बद्धहिमांशु रत्नमुकुटां वन्देऽरविन्दस्थिताम् । तां यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं, त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि त्वं विश्वतो मुख: । यो ब्रह्माणं विदधाति ।

क्रियाशक्ति: देवानां कार्यसिद्धये आविर्भवति सा शक्ति यदा उत्पन्नेति तदा लोके सा नित्या शक्तिरित्यभिधीयते । सा तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीम्, यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम स्वगुणत्वप्रतिपादक कर्ममोक्षं पुरुषं ब्रह्मयोनिं स्त्रीणां प्रीतिविशिष्टेण स्त्रीप्राधान्यं प्रतिष्ठितम् ।

धर्मार्थौ स्त्रोषु समेत्य लोकाः प्रतिष्ठिताः यो वै भूमा तत्सुखं नाल्पे सुखमस्ति । कल्पकपापि अकारोतरूपा संसार ताराय या पोतरूपा- शक्ति शिवादिभिन्नाऽपि शिवाप्तिहेतुः शक्तिः शिवं सततं न तनोतु ।

नूनं सर्वेषु देवेषु नाना नामधरा ह्यहं भवामि शक्तिरूपेण करोमि च पराक्रमं, गौरी ब्राह्मी तथा रौद्री, वाराही वैष्णवी शिवा वारुणी च कावेरी नरसिंही ,वैष्णवी ।

यथा शीतं तथा चाप्योष्ण्यं ज्योतिः दिवाकरे निशानाथे हिमाकरं प्रभवामि यथा तथास्मदहितस्तुतः सर्वेषु भिन्नोः ब्रह्मादिमूर्तिभिः कर्ता भोक्ता संहर्ता च सकलः स अन्यथः, सगुणा निर्गुणा रागिभिः च इति द्विधा भेदा प्रोक्ता मनीषिभिः, सगुणा रागिभिः सेव्या निर्गुणा तु विरागिभिः । तस्मात् एन_ मुखेनैवमात्यनंशोऽपि तथा शक्तिरित्येण वस्त्वेव शक्तितद्गु- क्रमः स्फुटः ।

अनंशोऽपि सदाशिवः येन मुखेन भुवनाद्यन्यतमांशलक्षणेन मुखेन भावनादौ भासते तन्मुखं तु शिवप्राप्त्युपायतया शक्तिरेव न हि तन्मुखं तु शिवप्राप्त्युपायतया एतद्वनमादौ च उपायान्तरमस्ति, उपपद्यते, अथवा अतएव शक्तिशक्तिमतोः उपायोपेयभावात्मा क्रमः सम्यगेव स्फुटः ।

अनंशोऽपि सदाशिवः येन मुखेन भुवनाधन्यमांसकारणेन मुखेन भाव-
नादौ भासते तन्मुखं तु शिवप्राप्त्युपायतया शक्तिरेव न हि एतदन्यमावो
उपायान्तरमस्ति, उपपद्यते, अथवा अतएव शक्तिर्कल्पतो: उपायोपेये-
भावात्मा क्रमः सम्यगेव स्फुटः ।

सा च मायाशक्ति परे तत्त्वे सर्वदा संविद्रूपेऽस्ति, ततः माया-
विशिष्टां तां संविदं परमेश्वरीं मायेश्वरीं भगवतीं सच्चिदानन्दरूपिणीं
ध्यायेत् तथा आराधयेच्च प्रणमेच्च च नपेत्, अपितु तेन सा सदया भूत्वा
देहिनं प्राणिनं मोचयन्त्येव ।

शक्ति एव मायां यथाकाले संहत्य स्वानुभूतिप्रदानतः सर्वैतन्यरूपां
तामापां शक्तिं च धीमहि बुद्धिं या नः प्रचोदयात् ।

वयं सर्वे शक्तिमाययावृताः यथाकामं न स्मरामो जगद्गुरुं परमं
पुराणं शान्तं सकल्यानन्दमनुभूकम् । एषा भगवति शक्ति देवी सर्वेषां कारण-
रूपेण महाविद्या महामाया पूर्णा प्रकृतिरव्यया दुर्ज्ञेया देवी योगगम्यादुराशया
इच्छा परात्मनः कामं नित्यानित्यरूपिणी शक्तिरच नाममावस्य एवं रूपं
कल्पितम् । शक्तिमत् परिकल्पने स एवापि अद्यं ,सकेकत्वं न भेदोऽस्ति सर्व-
देव ममास्य योऽसौ सा हमहं भेदोऽस्ति मतिविभ्रमात् अनयोरन्तरं सूक्ष्मं यो
वेदमतिमान् स हि विमुक्तः स तुसंसारान्मुच्यतेति नात्र नामधरा ।

ब्रह्म नित्यं सनातनं एकमेवाद्वितीयं, नानानामधरा सा शक्ति सर्वेषु देवेषु पराक्रमं शक्तिरूपेण करोति । उत्पन्नेषु समस्तेषु कार्येषु प्रविशति देव्यास्तस्या हि या: कल्या: नानाभिनयनर्तना: सा क्षमा ब्रह्मा सर्वेश्वरा-भरणरोत्सव: क्रियासौ ग्रामनगरग्रामण्डलमालिका: स्पन्दान करोति, कल्पितावयवात्मिका सा शक्ति काली कमलिनी काली क्रिया ब्रह्माण्डकालिका घटे स्वावयवो भूतां दृश्यजगमोमिश्रां हृदि, चित् सम्पदो अन्तर्निहिते तस्या कल्पनैव हृदि मुरं प्रेम वा ज्ञादित्येव कल्पनैव यथा मुरं पवनस्य तथा स्पन्द-स्तथैवेच्छा सा शिवस्य यथा स्पन्दोऽनिल स्यान्त: प्रशान्तेच्छस्तथा शिव: अमूर्त: मूर्तं आकाशे शब्दाडम्बर मानिल: यथा स्पन्दस्तनोत्येव शिवेच्छा कुरुते ।

यदैव शक्तिराविता तदा वैचित्र्यं आगतम्, यदा एष खलु शुद्धाया मनागपि हि संविद: । यथा एवं पवन: स्पन्दमेकमोष्ण्यानलो यथा रिन्ध्यात्रं स्पन्दशक्तिरेव तथैवैकात्म्य सर्वदा चितिशक्ते देव्या: क्रिया: प्रतिस्थानं यदा आत्मनि तथा भूतिस्थिते तदैव शिवशक्ति उच्यते । अनन्यां तस्य तां विद्धि स्पन्दशक्तिं मनोमयीं कथं आस्तां विन्दते ।

गायत्रीशक्ति तत्त्वमीमांसायां - भूरिति सन्मात्रमुच्यते, भुव इति सर्वभावयति प्रकाशयतीति व्युत्पत्त्या चिद्रूपं शक्तिमुच्यते, सुविकृतो इति व्युत्पत्त्या स्वरिति सुष्ठु सर्वैर्विधमाणत्वात् स्वरूपमुच्यते ।

तत् शब्देन प्रत्यग्भूतं स्वतः सिद्धं परं ब्रह्मोच्यते । सवितुरिति सृष्टि-स्थितिलयकारणकस्य सर्वप्रपञ्चस्य समस्तद्वैतविभ्रमस्याधिष्ठान रूपस्य इति । सवितुः सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्येति -- परमेश्वरस्यात्मभूतं वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च सम्भजनीयम् । वरेण्यमिति सर्ववरणीयम्, निरतिशयानन्दरूपं, भर्गं इति अविद्यादिदोषभर्जनात्मकज्ञानैक विग्रहत्वम् ।

गायत्रीशब्दितत्त्वार्थविषये - ॐ भूः सत्, भुवः चित्, स्वः आनन्दस्वरूप, तत् त्वमसि वाक्यघटक तत्पदलक्ष्य, सवितुः यतो वा इमानि भूतानि जायन्ते। जन्माद्यस्य यतः इत्यादिलक्षणलक्षित जगदुत्पादक सूर्यः वरेण्यम् । वरणीय सर्वश्रेष्ठ भर्गः स्वज्ञानद्वारा अविद्या एवं तत्कार्य भर्जक दाहक देवस्य स्वयं ज्योतिः स्वरूपपरब्रह्मणः धीमहि ध्यायेमः ।

सवितुर्देवस्येत्यत्र षष्ठी शिरोवदौपचारिकः । अविद्या तत् कार्ययोर्भर्जको भर्गः स्वयं ज्योतिः परब्रह्मात्मकं देवः धीमहि ध्यायेम योऽहं सोऽसौ योऽसौ सोऽहमिति ।

प्रणवान्ता गायत्री शक्ति जपादिष्वाम्नाता, तत्र शुद्ध गायत्री प्रत्यग् ब्रह्मैक्यबोधिका शक्ति, बुद्ध्यादि सर्वदृश्यसाक्षिकारणं यस्य स्वरूपं तत् सर्वाधिष्ठानभूतं परमानन्दं निरस्तसमस्तानर्थरूपं स्वप्रकाशचिदात्मकं ब्रह्म स्येत

शक्तिं ध्यायेत । एवं सह ब्रह्मणः स्वविवर्ताधिष्ठानत्वेन रज्जुसर्पन्यायेनापवाद-सामानाधिकरण्यरूपमैक्यम्, सोऽयमिति न्यायेन सर्वशक्तिप्रत्यगात्मनो ब्रह्मणा सह तादात्म्यरूपमैकत्वं भवति इति सर्वैक्यब्रह्मबोधकोऽयं गायत्री-शक्तिमन्त्र सम्पद्यते ।

यो वै देवानां शक्ति प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे, मनुरहं सूर्यश्चेति तदिदमप्ये-तर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशते आत्मा शक्ति ह्येषां स भवति । अयमात्मा ब्रह्मतत्त्वमसि, प्रज्ञानं ब्रह्म इत्यादि ।

मन्त्रशक्ति गुरुदेवात्मकत्वेनात्मानं भावयन् यथाशक्ति गायत्रीजपः करणीय । तावानस्य महिमा ततो ज्यायांश्च पुरुषः पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ।

ब्रह्मगायत्री शक्ति-यद्वैतद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादा-काशः ,अयं वाव स योऽयमन्तः पुरुषः आकाशो यो वै सोऽन्तःपुरुष आकाशः शक्ति अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णम प्रवर्तिनीं शक्तिं श्रियं लभते पूर्णं य एवं वेद ।

यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्व-नुत्तमेषु लोके ष्विदं वाव तद् यदिदमस्मिन्नन्तःपुरुषे ज्योतिः ।

षडङ्गोपासनाफल :

ते वा एते पञ्च-ब्रह्मपुरुषाः शक्ति स्वर्गस्य लोकस्य च द्वारपाः स य एतानेवं पञ्चब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गलोकम् । प्रत्यक्षं ह्येतदजितकरणतया बाह्यविषया-सङ्गानृत प्रसक्तत्वान्न हार्दे ब्रह्मणि मनस्तिष्ठति तस्मात् सत्यं उक्तमेते पञ्चब्रह्मपुरुषाः स्वर्गस्य लोकस्य च द्वारपा इति ज्ञायते ।

भूमिरन्तरिक्षशक्ति द्यौरित्यष्टावक्षार ह वा एकं गायत्रं पदमेतद् हैवास्या एतत्यावदेषु त्रिषु लोकेषु तावद् जयति यो ऽस्या एतदेवं पदं वेद इति ज्ञायते । पूर्वाचार्या महर्षयश्च ऋषयोऽपि मुनीश्वरा, पितरो नागयक्षाश्च गन्धर्वाप्सरसां शक्तिं रक्षाः भूतपिशाचाश्च त्वमेव परमेश्वरि शक्तिं ऋग्यजुःसामवेदाश्च अथर्वाङ्गिरसानि त्वमेव पञ्चभूतानि शक्ति-तत्त्वानि जगदीश्वरि-ब्राह्मी सरस्वती सन्ध्या तुरीया त्वं महेश्वरी, सर्व-शास्त्राणि त्वमेव सर्वं संहिताः पुराणानि च तन्त्राणि महागमशतानि सत् ब्रह्मस्वरूपा त्वं किञ्चित् सदसदात्मिका परात् परेशी ।

शक्तिरूपा आत्मन: आकाशो भवति, आकाशाद्वायुर्भवति वायो-रग्निर्भवति, अग्नेरोंकारो भवति, ॐकाराद् व्याहृतिर्भवति व्याहृतयो शक्तिर्भवति ।

पुराणेषु सा हृदयेषा शक्ति प्राणा: वै गयांस्तत् प्राणांस्तत्रे तद्यद गयांस्तत्रे तस्माद्गायत्री नाम, यस्या अन्वाह तस्य प्राणांस्त्रायते । पुराणेषु सर्वे शाक्ता द्विजा: प्रोक्ता न शैवा न च वैष्णवा: आदिशक्तिं उपासन्ते सा देवमातरम् ।

विद्याशक्ति:

हे अक्षरे ब्रह्मपरे अनन्ते विद्याविद्ये निहिते यत्र गूढे क्षरन्त्व विद्या, अमृतं तु विद्याशक्ति विद्या विद्ये शक्ति ईशते यस्तु सोऽन्य:। सा विद्याशक्ति परमा मुक्तेर्हेतुभूता सनातना संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ।

सा विद्याशक्ति -- तं त्रिगुणाऽपि त्रयो गुणा: यस्या सा, सत्वं रजस्तम इति त्रयो गुणा:, सत्वगुणा: त्वं वैष्णवी शक्ति: सती जगन्ती रक्षसि, रजोगुणा त्वं ब्रह्मीशक्ति: सती जगन्ति संहरसि । अत एव त्रिगुणाऽप्यसि, हे देवि ! त्वमव्याकृताऽसि केनाऽपि न व्याकृताऽसि पदेन वाक्येन वा । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इति श्रुते:, त्वं च विद्यात्वेन परब्रह्मात्वमेव ।

यथा हे देवि ! त्वमव्याकृताऽसि न केनाऽपि प्रकाशिताऽसि । परप्रकाशित्वा न म्युक्रमात् ब्रह्म स्वरूपस्य स्वयं प्रकाशत्वान्युक्रमाच्च, तस्य त्वञ्च परब्रह्मत्वमेव स्वयं प्रकाशमानमनतिशयानन्दचिद्रूपमसीत्यर्थः ।

द्वे विद्ये वेदितव्ये यथा परा चैवापरा च ते, तत्रापरा तु विज्ञेया ऋग्वेदो यजुरेव च । सामवेदः तथा अथर्ववेदः शिक्षा मुनीश्वर; कल्पो व्याकरणं चैव निरुक्तं छन्दः ,ज्योतिषं च तथा आत्मा विज्ञाय अपि कुव्यः एषा परमा विद्या यथाऽत्मा परकादारम् ।

या विद्याऽसि च मुक्तिहेतुरविचिन्त्य महाव्रता त्वं मन्यसे सुनियते-न्द्रियतत्वसारैः मोक्षार्थिभिः मुनिभिः अस्त समस्तदोषैः विद्याऽसि स भगवती परमा नित्या शब्दात्मिका ॐकाररूपा त्रिपदा त्रयी त्रिवेदवन्द्या त्रिदिवाधिदेवी, त्रिलोककर्त्री त्रितयस्य भर्त्री त्रैकालिकी सङ्कलनाविधात्री । त्रैगुण्य भेदात् त्रिविधस्वरूपा त्रैविध्य युक्तस्य फलस्य दात्री ।

तथा अपर्वस्य विद्यायिनो त्वं दयार्द्रदृक्कोणविलोकेन त्वं वाङ्मयी विश्ववदान्यमूर्तिः विश्वस्वरूपापि तथा विश्वगर्भा च ।

तत्वात्मिका तत्वपरात्परा च दुस्तारिका तारकशङ्करस्य भूतं च भव्यं सकलं यत् स्तत् त्वतः परं वाचामनाचामनवद्यवन्द्यां विज्ञाः पश्यन्ति प्रवदन्ति च त्वं विश्वात्मिके विश्वविलासभूते विश्वाश्रये विमूर्त्यधिष्ठात्रि विभूतिहात्रि पदे त्वदाये मदीया प्रणति ।

एवं निरवयवस्य चिन्मूर्ता चेतन्निकस्यापि च प्राकृतस्य विश्वस्य योनि मता तथापि समुद्रफेनादि विलक्षणता । भोगस्य भोक्त्री करणस्य कर्त्री धात्वव्ययप्रत्ययलिङ्गशून्या ज्ञेया ।

न हि तया शक्त्या विना परमेश्वरस्य स्रष्टृत्वं सिध्यति, शक्तिरहितस्य प्रवृत्त्यनुपपत्तेः एकस्यापि ब्रह्मणो विचित्रशक्तियोगात् क्षीरादी-वद्विचित्रपरिणाम उपपद्यते । न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्य-धिकश्च दृश्यते, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च । मनस्त्वं व्योम त्वं मरुदसि भूमिस्त्वयि परिणतायां त्वं त्वापरत्वम् । त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं शिवयुवति भावेन बिभृषे अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति ।

एकत्वांशेन शक्त्या ज्ञानान्मोक्षव्यवहारः सेत्स्यति नानात्वांशेन तु कर्मकाण्डाश्रयो लौकिकवैदिकव्यवहारो सेत्स्यत । एतदात्म्यमिदं सर्वं तत् सत्यम् परमकारणस्यैवैकस्य सत्यत्वावधारणात् सर्वत्र पुराणेषु शक्तितत्त्वं विद्यते ।

जगदुत्पत्तिस्थितिप्रलयहेतुत्वश्रुतेरनेकशक्तित्वं ब्रह्मण इति चेत् न विशेष-निराकरण श्रुतीनामनन्यार्थं स्यात्, उत्पत्त्यादि श्रुतीनामपि ज्ञानमनन्यार्थत्वमिति

चेत् न, तासामेकत्वप्रतिपादनपरत्वात्, सम्यग्ज्ञानापनोद्यस्य कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनाभ्युपगमात् सर्वज्ञस्येश्वरस्य आत्मभूते इव अविद्याकल्पिते नामरूपे, तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य माया शक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते ।

तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेव ईश्वरस्य ईश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वञ्च न परमार्थतो विद्ययापास्तसर्वोपाधिस्वरूपे आत्मनि ईशित्रीशितव्य सर्वज्ञत्वादिव्यवहार उपपद्यते ।

सर्वशक्तियुक्ता च परा देवतेत्यभ्युपगन्तव्यम् , कुतः, तद्दर्शनात् । यथा हि दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः । सा शक्तिः शब्दब्रह्ममयी परापरमयी ज्योतिर्मयी वाङ्मयी, नित्यानन्दमयी निरञ्जनमयी सत्त्वमयी चिन्मयी तत्त्वातीतमयी परात्परमयी मायामयी श्रीमयी सर्वैश्वर्यमयी सदाशिवमयी मां पाहि मोनाम्बिके शक्तिस्वरूपिणी उमा मा ।

वागनपायिनी क्रियाशक्तिप्रधानायाः स्वरूपज्योतिरेवान्तः परा शब्दशब्दार्थकारणं प्रकृतेर्बिन्दुरूपिण्याः शब्दब्रह्मवत्पुरा, प्रकाशो हि स्वस्वभावभूतं स्वात्मविज्ञानविश्रान्ति पराकृतिस्वातन्त्र्यमाया अविद्यादिशब्दैस्सैरागादिकैर्व्यवह्रियमाणं जगद्बीजभूतं विमर्शः । विमर्शप्रकाशयोश्चैतन्यता च कलातुल्यो उभयोरपि चैतन्यत्वं कर्तृत्वञ्च भवतीति चमत्कारः । अयं चमत्कारो-

ऽन्योन्यव्याप्ति निबन्धन: व्यापकमेव चैतन्यं व्याप्यमेव कर्ममिति द्वयोरपि व्यापकत्वे व्याप्यत्वे च सति चिदचिद्भावचमत्कार:।

तस्य पराशक्ति विरणोन्मेषकार्यपरिणामा भावाऽभावस्वरूपा सा विद्या विद्येति कथ्यते। विद्या अविद्येति देव्या द्वे रूपे जानीहि पार्थिव एकया मुच्यते जन्तुरन्यया बध्यते। पुन: यथा नद्य: स्यन्दमाना: समुद्रं प्राप्यास्तं गच्छन्ति नामरूपे विहाय, तादात्म्यञ्च तदभिन्नत्वे सति तदभेदेन प्रतीयमानत्वं अभेदस्याव्यस्तत्वान्न तयोर्विरोध:। न हि प्रकाशैकात्म्यबोधैक रूपत्वादृते शक्तिमत्प्रकाशनं उपपद्यते।

---:o:---

## तृतीयोऽध्यायः

(क) शक्ति-शक्तिमतोरभेद परिकल्पना

(ख) शक्तीनाँ स्वरूप विभेदः

(क) शक्ति-शक्तिमतोर्भेद परिकल्पना

निष्पन्दतां शक्तिपदे स्वातं भवतां चिदचित्कालितोच्छ्रितत्वात् ,एवं चतुर्विधमपिमितत्वात्, जीवमात्रविश्रान्ति भाक् शक्ति मानवीय घटवीजान्तर्गत वटवृक्षाय सूक्ष्मपतुल्यशब्दसृष्टिसूक्ष्मप्रकाशिनी शक्ति,त्रिपुरसुन्दरी एव । तादृश शक्ते सूक्ष्मपवत्वप्रवृत्तिनिमित्तकपरापदवाच्या । सैव माति कारस्कोति मातृकाशक्तिरित्युच्यते ।

सा शक्तिप्राप्तोपभोगकालानां कर्मणां मुक्तिदायिनी त्रिपुरा हि पराशक्तेः शब्दार्थविभाय उच्यते ।

सुषुप्तावज्ञानमात्रावच्छिन्नस्य जीवस्य स्वप्नदशायां ईषत् प्रकटव्यवहारायान्तः करणमुपाधिरिष्यते तथा जागरणको विस्पष्टव्यवहाराय स्थूलशरीरमुपाधिः। न चैवमुपाधिभेदाज्जीवभेदप्रसङ्गः पूर्वापूर्वोपाध्यवच्छिन्नस्यैवान्तरोत्तरोपाध्यन्तरेणावच्छेदात्, चैतन्यस्यैकत्वेऽपि अभिव्यञ्जकान्तःकरणभागभेदात् त्रिधा व्यपदेशो भवति ।

शक्तिकर्तृभागावच्छिन्नांशस्वदंशः प्रमाता क्रियाभागावच्छिन्नांशस्वदंशः प्रमाणं विमर्शकतयोत्पन्न भागावच्छिन्नांशस्वदंशः प्रमितिशक्तिरिति शक्ति-

शक्तिमतोरभेदपरिकल्पना प्रमातृ प्रमाणप्रमितीनां साङ्कर्यम् ।

ध्यानस्य क्रियावशात् स्फुरणस्येव शिवप्रकाशस्य गुम्फिता इव पञ्चापि भूतानि मधुरतां न मुञ्चन्ति । सा सैव अतिदुष्प्राया विद्याविद्या-स्वरूपिणी, वाग्भूता पराशक्ति या चिद्रूपा पराभिधा तां वन्दे अनिशं भक्त्या श्रीकण्ठार्धशरीरिणीम् । सर्वत्र वस्तुनि इदमाकारप्रतीतौ देहमात्रे आत्माकारप्रतीतौ भेदोच्छिन्नेदन्ताप्रतीति शक्ति विद्योतमाना विद्येति ।

इदम्प्रतीत्यन्यथाभावेन सर्वत्राहन्ताप्रतीत्यौ च मोक्षः । तस्य शक्तिः परा विष्णोर्जगत् कार्यविधि भावाभाव स्वरूपा सा विद्याविद्येति गीयते सर्वनानापुराणसारोद्धारे ।

सा वाग्भूता पराशक्तिर्या चिद्रूपा पराभिधा तामनिशं वन्दे, सर्वत्र वस्तुनि इदमाकारप्रतीतौ देहमात्रे आत्माकारप्रतीतौ भेदोच्छिन्नेदन्ता-प्रतीति खलु बन्धः ।

सा एव शक्तिः इन्तौ स्व शक्तिप्रभावेन विद्योतमाना विद्येति गीयते । इदं प्रतीत्यन्यथाभावेन सर्वत्राहन्ताप्रतीत्यौ स्वयमेव च मोक्षः । तस्य शक्तिः विष्णोः परा जगत् कार्ये परिणमा भावा अभावस्वरूपा सा विद्या विद्येति गीयते । भ्रान्तिर्विद्या परज्योतिः शिवरूपं इदं जगत् । भिन्नरूपेषु अर्थेषु विज्ञानं भ्रान्ति एव उच्यते ।

यदि वा केनापि रूपेण मानवजन्मना स्वसुखसन्निधानजीवनसुख-सम्पन्नादिकं दूरीभूतं कृतवद्भिः नु तथापि शान्तिमयजीवनयात्रा निर्वाहाय सम्यगाश्रय अवश्यमेव करणीयः। तस्मादात्मस्वरूपैव पराशक्तिरविषया प्रतिष्ठा, विशुद्धस्य विषया अव्यक्तोऽज्ञया । महामाया शक्तिरेव शान्तिः, पुंसः पूर्णता सा कला शान्तिशक्तिरित्युक्ता साधिकारास्पदम् । तत्रापरत्वं मायानाम्ना-त्मत्वेन मायाया परशक्तित्वमाच्छादनात्, परत्वं पूर्णत्वं अनन्यापेक्षया अहमिति, अपरत्वं अपूर्णत्वं अन्यापेक्षया मन्यन्ते इति नानापुराणशास्त्रोद्गारे ।

अतः प्रकाशस्य मानवीयजीवने यदात्ममात्र विमर्शोऽनन्योन्मुखः स्वात्मप्रकाशनात्मको विमर्शात्मकः सोऽहमित्युच्यते --

इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम् ।
क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ।। (वि०पु००,२१।८१)

वासनामय नृणां काचित् आश्चर्यमय शृङ्खलाबद्धाः यथा मुक्तास्तिष्ठ-न्ति प्रधावन्ति मृगवत् पाशाङ्कुशौ तदीयौ रागद्वेषात्मकौ शब्दस्पर्शादियौ बाणधनुषि तस्य अभूताम् । अतो प्रति तल्लीनमपि च विरहे च व्यस्तशक्तिस्व-रूपं ब्रह्म सर्वेश्वरं सदा तथैव शक्त्या स्फुरति प्राप्तां, तामेव पश्यति । अनन्यां तस्यां चिति स्पन्दशक्तिं मनोमयीम् । एवं स्पन्दशक्तिस्तदिच्छैव दृश्याभासं तनोति । सा तस्मादिच्छाशक्तिः कौमार्या सर्वाः संविद्मयाः सर्वाः तस्या परत्वं अस्मिता च ।

सा शक्ति विशुद्धा परा चिन्मयी स्वप्रकाशाकृतानन्दरूपा जगद्-

व्यापिका च । तवेदृग्विधाया निराकारशक्तिः किमनस्यापि अन्तहृदि

भावनीया ।

तथा च अपरिच्छिन्न चिदचिच्छक्तिसामरस्य रूपाकारविश्रान्तिमय

देहात्म सामरस्य कारणस्वरूपे शक्तिप्रमातुः स्वरूपसिद्धिहेतुर्विशेषः मन्यते नाना-

पुराणपारावारे अत्र शक्तिमतोरभेद परिकल्पना स्वीकृयते ।

<u>नित्याशक्ति -</u>

देवानां कार्यसिद्धयर्थमाविर्भवति सा यदा ।
उत्पन्नेति तदा लोके सा नित्याऽप्यभिधीयते[1] ।।

शिवादीनामपिदेवानामपि सा शक्तिकर्माणि कारयन्ती जगन्निव

मायावलम्ब्यते सेयमम्बा शक्तिस्वरूपा श्रीशिवसुन्दरी एव ।

सा नित्यं विश्वं वशयति हरिर्निग्रहानुग्रहाभ्यां बाधे शक्तिं विषद्यति,

ते हन्त कारुण्यपूरः। त्वयि एव लामतते दया रघुनतेर्देवस्य सत्यं यतो वेदेहि ।

त्वदसन्निधौ भगवता वाली निरागाहतः। निन्ये कापि वधूर्वधं तव तु सान्निध्ये

त्वदङ्गस्पर्शां कुर्वाणोऽप्यभितः पतन्नशरणः काको विवेकोज्झितः ।

---

१- मार्कण्डेय पु० स्०।५।२१

हृदयेषु नरोत्तमानां गौरि त्वमस्ति तस्यापि देवाधिपस्य हृदयं त्वमनुप्रविष्टा । पद्मे ! तथापि तथापि हृदये प्रणिदध्येयं त्वामेव नागरिकता-लितयां श्यामः । त्वं ब्रह्मादिवन्दनार्हं दुःखदारं देवाधिप देवि यत् पुराणमपि पुरुषं पुनरखण्डं करणीन्द्रियवाचिके ।

ब्रह्मादयोऽपि यत्पादपङ्कजरजोगन्धसृष्टिस्थितिप्रलयकारणतां व्रजन्ति । लावण्यवारिनिधिवीचिपरिप्लुतायै तस्यै हरवल्लभायै च सततं नमोऽस्तु ।

पुराणेषु महिषमर्दिनी भवानीति वर्णिते विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे, वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं - पौरुषो-पघ्ननिघ्नं निर्विघ्नं निघ्नतीव शमयतु दुरितं भूरिभावा भवानी । गोनासाय नियोजिताः सपदि वडौषधिः कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन् बिभ्रति ।

भद्रीभूतगणाय गोत्रजरतिनिर्दिष्टमन्त्राय दाराधिकृतदात्यद्भुता विवाह-समये प्रीता च भीता च । भिक्षार्थी स क्व यातः बलिमखे खलु, ताण्डवं क्वाद्य भद्रे वृन्दावनान्ते मन्ये, क्व नु स मृगशिशुर्नैव जाने वराहम् ।

याते कश्चिन्न दृष्टो बहुकृपयतिनोऽपि स्वास्य वेदा लीलासंतान इत्थं नवनि-
धिनिभवत् कन्ययोस्त्रायता नः ।

सा शक्तिः कलाकेलि शील क्वणितमपि काञ्चीगुणगणां विधुभा-
ङ्गणां मध्ये कुचभरनताङ्गणां शशिमुखीं कराम्भोज भ्राजत् सधनुरिषुपाशाङ्कुशवरां
समन्तात्सर्वां वन्दे । स्मरहरतपः सिद्धि पटलीषु स्थिता सर्वस्यान्ते निजमहिम-
शान्तेन महसा विधुरा त्वं काचित् परमसुख चैतन्य कलिका शुकादीनां प्रायामपि
हृदयवाचामविषयः, शिवः शक्तिः, शक्तिः शिव इति न निर्णेतुमुचिता ।

सा एकमेव नित्याशक्तिमतयोरभेदपरिकल्पनाया विश्वस्मिन् रमण-
मनसा लमकरोति, ततः त्वत् वशे महदिदमहङ्कारसहितम् मनस्तेनारब्धं
सकलमपि दृग्दृश्यमनुभवदेवं लोकेऽस्मिन् किमपि न विलोके त्वदितरत् ।

न धूपैः, दीपैः, मधुरनैवेद्यनिवहैः, पुष्पैः, गन्धैः, विविधवन्द्यैः
स्तुतिपदैः समस्त त्रैलोक्यप्रसरणकलसम्भार विभवे ।. सपर्या पर्याप्ता तव
भावोपकरणे भवति । दरिद्रं दुःशीलं दरविगमनं दुःखदलितं दुराचारं घूरे
पतितमपरं दुर्भरतरं, सा शक्तिः कर्मयुक्तं मुक्तिप्रमुख सुखसम्पत् समुदयाः पुमांसं
सेवेरन् भगवति ! । भगवति तव दृष्टिरहितं पिबन्तं पादवकं सरभसमयवष्टभ्य
पिबति, विपास्ये सस्नेहमवणस्तो दक्षिणकुचः, परो मातः स्कन्दोपरि
सकरुणस्यन्द मधुरः स्तनस्ते तं भावं प्रकटयितुमलक्षणाशिशो त्रिलोचन्तः

वृत्तत्रयात हृदयाब्ज अष्टदलयो परस्ताद् वृत्तैकस्फुट भुवनकोशान्तर्गते दृशारन्दे ऽन्त: स्फुटितवसुकोणान्तर लसत्त्रिकोणे त्वं नित्यं विलससि ।

महाबिन्दु मधुणा निदानं च मन्त्राणां विलसति धरित्री हिमकर: शिवो मायाशक्तिर्ज्वलनजनो मानदकर: तथार्धेन्दुर्बिन्दुर्नवकमिदं अस्मादुपचितान्तरङ्ग न्यायेन सकल मन्त्रनिवह: स्फुरति ।

रत्नप्रवर परिणत् पाटवहरे स्फुराच्चन्ता, प्रकाशे पूर्णानां भुवनकायेतो रुचिमूर्ता नवीनोपकारा परिवृढसलानां वरणयोर्नैतानां ते कान्तिस्तिरयतु । मम स्वान्तातिरियं प्रवाली सर्वपहरण विलोलाङ्गुरता: ।

सा शक्ति चतुर्कर्णिपाकि त युगपद् उद्भावनकरा: करास्ते चत्वार: कलयितुं शर्मविमलं रसक्रीडामाने प्रणयिनि, वारुणि तवोस्ततो ब्राह्मीभूतशक्ति त्रिदशधुनी वीचो विशदयो प्रकाशप्रादुर्भूत प्रचुर सुखसौभाग्य पदयो: स्थिरं स्यात् मच्चित्तं गिरिशमहिषि त्वत् पदयो: ।

शक्तिभेदपरिकल्पनायां - उमेश्वरे उमामयी, रमेश्वरे रमामयी, गिरीश्वरे प्रभामयीशक्ति, कामायां रमावतीं शक्ति, सुधाकरे सुधामयीशक्ति, चराचरे विद्यामयी शक्तिं, क्रियासुसंविद्यामयी शक्तिं, स्वधामयी स्वधावतीं शक्ति, जगत् सु चेतनामयी शक्ति, मन: सु वासनामयी शक्तिं, कविन्द्रभावनामयी शक्ति, प्रभामयी शक्ति, प्रभावतीं शक्तिं, वनेषु च चञ्चलामयी शक्ति

कलावतीं कलामयी शक्तिं शरीरिणामिच्छामयी चिन्मयी शक्ति स्वाकारां शक्ति ।

अये पद्मालये ! मातर्दयालः पाहिदीनं कातरार्णं वीतास्य संसारेऽस्य निःसारे नितान्तं मां, तवालम्बादहं बालः अधुना लोकं तुच्छं मन्ये । त्वमेवोपेक्षसे कस्मादकस्माद्विहीनं मां अनन्तदुःख संवेदिनीकायं छिन्नचित्तोऽहम् । दृष्टं सौख्यसुखं मातर्दीनत्वो पाहुखीनं माम् , न मार्गं जानन् एवं ते दुरन्तोऽस्मिन् भवे भ्रमाम्यं, इदानीं त्वदवाधारे नयागारे नवीनं मां , भवाब्धौ निर्भरा छूण्णे स्वरण्णे प्राप्तवान् इति ।

अम्ब मूढमीनं नाम न जाने मातर्धर्मातिविदित्वा नृपाः प्राप्याधिकारं ते निकारं चित्तु विन्दन्ते, न कुर्विताः कृपाम्भोधे । क्वचो कन्याप्यवानं मां सुहृदं जीवने मातर्नैव पुष्पं परीक्षेयाः, मातः त्राणं निरीक्षेयाः प्रपुष्यत्वापपीनं मां अस्मिन् अनन्तोऽस्मिन् विधानेऽहं न जाने तद्युक्तमोभासितान् ।

जगद्धात्री शक्ति :

सिंहस्कन्धसमारूढां नानालङ्कारभूषितां चतुर्भुजां महादेवीं नागयज्ञोपवीतिनीं शङ्खशार्ङ्गसमायुक्त वामपाणि द्वयान्वितां जगद्धात्रीं, चक्रञ्च पञ्चबाणाञ्च दधतीं, दक्षिणेकरे रक्तवस्त्रपरिधानां बालार्कसदृशीं

तनुं नारदाद्यैर्मुनिगणैः सेवितां भवसुन्दरीम् त्रिवलीवलयोपेतां नाभिनाल-मृणालिनीम्, रत्नद्वीपे महाद्वीपे सिंहासनसमन्विते प्रफुल्लकमलारूढां ध्यायेत्तां भवगेहिनीं, आधारभूते चाधेये धृतिरूपे धुरन्धरे, ध्रुवे ध्रुवपदे धीरे जगद्धात्रीशक्ति नमोऽस्तु ते।

शवाकारे शक्तिरूपे शक्तिस्थे शक्तिविग्रहे शाक्ताचारप्रिये देवि जगद्धात्रि नमोऽस्तु ते। जय जयदे जगदानन्दे जगदेकप्रपूजिते, जय सर्वगते दुर्गे जगद्धात्रि नमोऽस्तु ते। परमाणुस्वरूपे च द्व्यणुकादि स्वरूपिणि स्थूलाति-सूक्ष्मरूपेण प्राणापानादिरूपिणि भावाभावस्वरूपे च जगद्धात्रि,कालरूपे कालेशे कालाकालविभेदिनि। सर्वस्वरूपे सर्वेशि जगद्धात्रि महाविघ्ने महोत्साहे महामाये वरप्रदे प्रपन्नवत्सले साध्वीशे जगद्धात्रि अगम्ये जगन्माये माहेश्वरि वराङ्गने अशेषरूपरूपस्थे त्रिसप्तकोटिमन्त्राणां शक्तिरूपे सनातनि सर्वशक्ति-स्वरूपे च जगद्धात्रि नमोऽस्तु ते।

तीर्थस्नानदानयोगसारे जानामि त्वमेव सर्वसर्वस्वे दयारूपे दयादृष्टे दयार्द्रे दुःखमोचनि सर्वापत्तारिके दुर्गे अनन्याश्रमधामस्थे महायोगीशहृत्पुरे अपेक्षारूपकूटस्थेयः एवं तु शक्तिं पूजयन्ते साधकोत्तमः स सर्वपापविनिर्मुक्तः पूजा-फलमवाप्नुयात्।

सरस्वतीशक्तितत्त्व :

नामरूपात्मकं सर्वं यस्यामावेश्य तां पुनः ।

ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वती[1] ।।

वाङ्मये मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि, वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान् संदधाम्यृतं वदिष्यामि ।

या शक्ति वेदान्तार्थ तत्त्वैकरूपा परमार्थतः नामरूपात्मना व्यक्ता सा मां पातु सरस्वती । नीहारहारघनसारसुधाकराभ्यां कल्याणदां कनकचम्पकदामभूषां उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं शक्तिं वाणीं नमामी मनसा वचसा विभूत्यै या साङ्गोपाङ्ग वेदेषु चतुर्ष्वेव गीयते अद्वैता ब्रह्मणः शक्ति सा मां पातु सरस्वती ।

या शक्तिवर्णपदवाक्यार्थं स्वरूपेणैव वर्तते अनादिनिधनानन्ता सा मां पातु सरस्वती ।

---

१- देवीपुराण ७।१२१

या शक्ति अध्यात्ममधिदैवञ्च देवानां सम्पमीश्वरी सा मां प्रत्य-गात्मे वदन्ती । या अन्तर्याम्यात्मना विश्वं त्रैलोक्यं यानि इच्छन्ति रुद्रा-दित्यादिरूपस्था यस्यां आवेश्य ध्यायन्ति सर्वैका सा मां पातु ।

सो महो अर्णः सरस्वती प्रचेतयति केतुना, धियो विश्वा विराजति, या शक्ति प्रत्यग् दृष्टिभिर्विध्यमानानुभूतये व्यापिनी शक्तिरेका ।
चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः,
गुहात्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ।

शब्दजात्यादिभिर्भेदैरष्टधा नवधा तथा मुख्यभेदेन विकल्पिता परिकल्पिता सा निर्विकल्पात्मना व्यक्ता सा यद् वाग्वदन्त्यविचेतानि राष्ट्री देवानां मन्द्रा निषसाद । चतस्र ऊर्ज्जं पयांसि दुदुहे क्वस्विदस्याः परमं जगाम ।

यां सर्वे व्यक्ताव्यक्तगिरः वेदाद्या व्याहरन्ति सा मां कामदुघा धेनु वदेव । ता शक्तिरूपिणी देवीं वाचमजनयन्त देवाः तां विश्वरूपा । यां विदित्वा अखिलं बन्धं निर्मूल्य अखिलवर्त्मना योगी परं स्थानं याति सा सरस्वती मां पातु । नामरूपात्मकं सर्वं शक्तिभेदं तत्वञ्च यस्यामावेश्य ध्यायन्ति सा ब्रह्मैका यापि नानापुराणसारोद्धारे मन्यन्ते ।

सा तप्त-सुवर्ण सदृशीं गौरीं, मुकुटय समन्वितां, नीलारविन्द-वामेन पाणिना बिभ्रतीं शुक्लं चामरं धृत्वा सव्यस्याङ्गे दक्षिणे विन्यस्य दक्षिणं हस्तं सदा तिष्ठन्ति ।

समस्तानां नक्षत्रराशिविराजितदिवाकरनिशाकर प्रोद्भासित, सिंहव्याघ्रादिवन्यपशुनिनादित उत्तुङ्गहिमालयादि महीधरविधारित तरङ्ग-मालाकुलाऽऽकुलानेकपयोधि समाकलित सर्वाङ्गीणप्राकृतिक सुषमा विलासितेऽस्मिन् अनन्तापारागण्यब्रह्माण्डपिण्डरूप चित्रविचित्र जगति यथाशक्त्या उत्पन्ना तथा परिपालिताऽन्तराऽन्ते यया समालोक्यो च, सा एव अतर्क्या अनन्तरूपेण महिम शालिनी गुणत्रयविभाविनी भक्तजनाभिवाञ्छितदायिनी शक्तिरूपिणी नवमातृका नमोऽस्तुते ।

एकधैव अस्मिन् तु सम्पूर्णजगति अवस्थिता अथवा इत्थमपि कथयन्ते यत् संसारस्य आधारशक्तिः आधारभूता जगतस्त्वमेका विश्वात्मिका धारयसीह विश्वम् । त्वयैतद् धार्यते विश्वम् । तस्मिन्ह तस्थु भुवनानि विश्वा, त्वमस्य विश्वस्य परं निधानम् । त्रिगुणमय विश्वशक्त्या इत्थं विराजमानं प्रतीयते यत् महाब्धौ मीन इव । तात्त्विक विचारेण जलराशि तथा मीनमध्ये दृष्टानां द्वैतभाव एव । परमात्मारूप आधारेण निहित गुणत्रयवान् जगतस्य विभाये

एव द्वैत तथा अद्वैतकल्पना विवर्ताभेदेन उप युक्त: आसन् । अद्वैत:कल्पना विवर्ताभेदेन च परमेश्वरस्य शरीररूपा प्रकृत्या उत्पन्नानन्तरं कल्पान्ते पुन: तेनैव समाहिता। एतदेव भगवद्गीता अभिनवानुवाद --

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ।।

शक्तिसंसारे अस्मिन् जगति सर्वत्र व्याप्तोऽस्ति, समस्तानां प्राकृतिकानां पृथिव्यादिपदार्थानां शक्त्या शरीरमस्ति । अतएव शरीर तथा शरीरस्य व्यावहारिक अभेदेनस्य स्वीकारं कृत्वा तासां शक्तीनां जगति तादात्म्य-सम्बन्ध पुराणेषूपवर्णिता भवति ।

इयमभेदानुसारेण प्रकृत्युत्पन्न विश्वस्य मूलकारणं शक्ति एव हि कथ्यते नानापुराणकारोद्वारे । वस्तुत: शक्ति देवीशक्त्या अननुप्राणिता प्रधाना प्रकृति किञ्चिन्मात्र कार्यसाधने न समर्था । इति हेतवा प्रकृतिस्वरूपात्मिका शक्ति एव जगतस्य मूलहेतु प्रतिपादितेति पुराणेषु मन्यते ।

जीवात्मा सत्तायां अनुप्राणितशरीरात् येन प्रकारेण केशनखानां उत्पत्तिसिद्धमास्ते तथैव व्यवहारेण येन प्रकारेण देवदत्त जीवात्मात् केशादिनां उत्पत्ति साधारणमस्ति तथैव शक्तिदेव्यनुप्राणित प्रधान-तत्वात् उत्पद्यमान जगतस्य सृष्टिमपि शक्तितया एव उपचरितमस्ति ।

अत: उक्तम् - विश्वस्य बीजं परमासि माया । गीतोक्त -- यच्चापि सर्वभूतानां विद्धि पार्थं सनातनम् । विश्वस्य त्रिविधसृष्टि, स्थिति, प्रलय, व्यापारं अपि एषा परमा देवी शक्ति एव --

विसृष्टौ सृष्टिरूपात्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपान्ते जगतोऽस्य जगन्मये ।।

जगतस्य उपादानं व्याकृता प्रकृतिरस्ति । इयां मेव क्षर पुरुष कथ्यते, परन्तु शक्ति अव्याकृता प्रकृतिरस्ति यास्यां अक्षरा इति कथ्यते । अव्याकृता जननी प्रकृति अर्थात् शक्ति देवीं अंशेन जगद्व्यापार निरन्तरं सम्पादयते ।

शक्तीनां मुख्यो विभूतिनां वर्णनं कर्तुम् शेषनागेन अनेक प्रयत्नेनाऽपि न शक्नोति । गीतायां श्रीभगवान् कृष्ण एव अनन्तं विभूतीनां येषां दिग्दर्शनं कृतं तदित्थम् --

कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिःक्षमा ।
बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।।

इत्थमेव सप्तशतीग्रन्थेऽपि शक्ति देव्या विभूतिनां किञ्चित् परिचयं निदिष्टम् ।

त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ।
त्वमेव सन्ध्या सावित्री त्वं देवि जननी परा ।।

इत्थं यदा यदा बाधा दानवोत्था भविष्यति ।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम् ॥ इत्यादि ।

मोहिनी :-

दिव्यस्रगम्बरालेपरत्नाभरण भूषिता ।
धनुः शार्ङ्गं चर्मखड्गचक्र गदाधरा ।
सिद्धचारणगन्धर्वैरप्सरः किन्नरोरगैः ।
उपासिताराञ्जलिभिः स्तूयमानेदमब्रवीत्[1] ॥

स्तुता सम्पूजिता पुष्पैर्धूपादिभिस्तथा,
ददाति वित्तं पुत्रांश्च मतिं धर्मं तथा शुभाम् ।
स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते[2] ॥

एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः ।
तस्याहं सकलां बाधां शमयिष्याम्यसंशयम् ॥
सर्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा ।
स्मरन्ममैतच्चरितं नरो मुच्येत संकटात्[3] ॥

--- :: ---

- - - - - - - - - - - - - - -

१- श्रीमद्भागवत् २।७।२८
२- मार्कण्डेयपु० -५। १८
३- ,, ,, ८। १९

पराशक्ति परिकल्पना

वेदस्य अद्वैतसिद्धान्तानुसारं एकमेव ब्रह्म तद् भिन्नं किमपि नास्ति । शक्ति ब्रह्माण्डमयेऽस्मिन् विश्वप्रपञ्चे स्थितिसंहारकारिणी विश्वेश्वरी महामाया प्रकृतिपरा शक्तिं तत् परब्रह्मस्य प्रच्छन्नमात्र एव । ब्रह्म ईश्वर विराट् पुरुषः, तथा ब्रह्मशक्ति अथवा ईश्वरशक्ति एव ।

ईदृशं भेदः तं मायामाया पराशक्तिमभिमानां प्रकाश वैभवसमर्थक नामरूप एव । सा सृष्टिकर्त्री ब्राह्मी शक्ति स्थिति तथा पालनकर्त्री वैष्णवीं शक्तिं एवञ्च संहारकारिणी तथा च लय कर्त्री शैवीशक्तिं कथ्यते ।

सा महामाया पराशक्तिरूप ब्रह्म एव हो संसारनाटकेऽस्मिन्नेकनाटवद् मायायाः प्रपञ्चं विस्तारं कुर्वाणे सति ब्रह्म, विष्णु,महेश्वरादि नाम-रूपाणां प्रकटी करोति ।

विष्णुः शरीर ग्रहणमहमीशान् एव च ।
कारितास्ते यतः कः स्या कः स्तोतुं शक्तिमानभवेत् ।।[१]

सा शक्तिरूपता -- अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः, अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ।[२]

- - - - - - - - - - - - - - - - - -

१- दुर्गासप्तशती १।८४

२- ऋग्वेद - १०।१२५।२

अहं राष्ट्री संगमनी वसूनां,

चिकितुषी प्रथमा यज्ञियानाम् ।

तां मा देवा व्यदधुः पुरुत्रा ,

भूरिस्थात्रां भूर्यावेशयन्तीम् ।।[1]

मया सो अन्नमत्ति यो विपश्यति,

यः प्राणिति यः शृणोत्युक्तम् ।

अमन्तवो मां त उपक्षियन्ति,

श्रुधि श्रुत श्रद्धिवं ते वदामि ।।[2]

अहमेव स्वयमिदं वदामि ,

जुष्टं देवेभिरुत मानुषेभिः ।

यं यं कामये तं तमुग्रं कृणोमि,

तं ब्रह्माणं तमृषिं तं सुमेधाम् ।।[3]

अहं सुवे पितरमस्य मूर्धन -

मम योनिरप्स्वन्तः समुद्रे ।

ततो वि तिष्ठे भुवनानु विश्वा ,

ताम् द्यां वर्ष्मणोप स्पृशामि ।।[4]

---

१- ऋग्वेद १०।१२५-३    ३- ऋग्वेद- १०।१२५-५
२- ,, १०।१२५-४    ४- ,, - १०।१२५-७

अहमेववात इव प्र वाम्या -

रभमाणा भुवनानि विश्वा ।

परो दिवा पर एना पृथिव्यै

तावती महिना सम्बभूव [1] ।।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।

ईश्वरोऽहं महादेवि ! केवलं शक्तियोगतः, शक्तिंविना

महेशानि ! सदाऽहं शवरूपकः [2] ।।

शक्तियुक्तो यदा देवि ! शिवोऽहं सर्वकामदः ।

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।

जीवभूतां महाबाहो ययेदं धार्यते जगत् [3] ।।

पराशक्तिप्रकृतिः सर्वाधारा सर्वस्मिन् जगत्सु ब्रह्मात्मा मनः

प्रकाशकरः महेश्वरः पञ्चप्राणाः स्वयं विष्णुर्बुद्धिः ईश्वरोप्रकृतीति

नानापुराणसारोद्धारे सारभूतं तत्त्वम् ।

- - - - - - - - - - - - - - - -

१- ऋग्वेद १०।१२५।८

२- शिवपुराण-६।१४।१२८

३- गीता - ७।५

सा शक्तिमतोर्भेदपरिकल्पनायां प्रधानशिवरूपा प्रकृतेश्च वसुन्धरा आधाररूपा सर्वेषां सर्वसत्त्वप्रसूतिका शक्ति, रत्नाकरा च रत्नगर्भा च सर्व-रत्नकरात्मा सा प्रजाभिश्च प्रजेशैश्च पूजिता वन्दिता साधिता नित्या अनित्या ध्यानरूपा सदा ।

सा सर्वोपभोग्यरूपा सर्वसम्पद्विधायिनी, यया विना सर्वं जगत् चराचरं निराधारम् ।

सा परा शक्ति कन्याता च कल्पिता पुरुषस्य प्रकृतिः गरीयसीति कार्यं माता शतगुणैः पितुः आदौ पुरुषमुत्थाय पश्चात् प्रकृतिं उच्चरेत् सा ।

श्रीपराशक्तिपरिकल्पनाविषये स्वामीश्रीमच्छङ्कराचार्यैरपि स्वमतं व्यक्तम् —

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः
चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलय-
त्रिरेखाभिः सार्धं तव भवनकोणाः परिणताः ॥[१]

- - - - - - - - - - - - - - - - - -

१- आनन्दलहरी- ५२ ।

रामवल्लभामताकातोषित

उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीं सर्वश्रेयस्करीं श्रीराम-वल्लभां सीतां श्रीरामसान्निध्यवशाज्जगदानन्ददायिनी उत्पत्तिस्थितिसंहार-कारिणीं सर्वदेहिनां, सा सीता भगवती ज्ञेया मूलप्रकृतिसंज्ञिता प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः[1] ।

आह्लादिनीं परां शक्तिं स्तुमः सात्वतसम्मताम् ।
यदाराध्यस्तदारामस्तद्धीनस्तया विना ।
तिष्ठामि न क्षणं शम्भो जीवनं परं मम[2] ॥

यावच्च सा शक्ति सरसिजकुलिशधारिपादे न स्याद्रतिः तरुण-ताङ्कुरलक्षिताया तावत् कथं तरुणभीरमणेः कान्तां ज्ञाने दृढं भवति भामिनि रामरूपम् । एतदेके वदन्त्यग्निं मनुमन्ये प्रजापतिं इदं प्राणमपरं शाश्वतं भवति ।

अनार्यकरुणारम्भ नृशंस कुलपांसन ।
अहं तव प्रियं मन्ये रामस्य व्यसनं महत् ॥

- - - - - - - - - - - - - -

१- श्रीरामतापिनी उपनिषद् - २।८

२- शिवपु० ४।१।७२

रामस्य व्यसनं दृष्ट्वा तेनैतानि प्रभाषसे ।
नैवचित्रं सपत्नेषु पापं लक्ष्मण यद् भवेत् ।
त्वद्विधेषु नृशंसेषु नित्यं प्रच्छन्नचारिषु
सुदुष्टस्त्वं वने राममेकमेकोऽनुगच्छसि ।
मम हेतोः प्रतिच्छन्नः प्रयुक्तो भरते न वा
तन्न सिध्यति सौमित्रे तवापि भरतस्य वा
कथमिन्दीवरश्यामं रामं पद्मनिभेक्षणम् ।
उपसंश्रित्य भर्तारं कामयेयं पृथग् जनम्[१] ।।

इति कर्मदोषवचनं वाल्मीकिरामायणे अरण्यकाण्डे लक्ष्मणं प्रति सीतावाक्यम् । एवं मर्मदोषविकासोत्कं प्रतिपादिता ।

महाकाव्योऽशचितपरिकल्पनायां सीता यदा अग्निमध्ये स्थापिता तदा संहारकारिणीं शक्तिमया कपटरूपेण विराजमानाऽसीत् । इदमेव व्यञ्जना।

---::---

१- वाल्मीकिरामायणे -आरण्यकाण्डे :लक्ष्मणं प्रति सीतावाक्यम् ।

काली तारा महाविद्या षोडशी भुवनेश्वरी ।

पञ्चमी छिन्नमस्ता च महाविद्या प्रकीर्तिता:।।

त्रिपुराभैरवी धूमावती च बगलाम्बिका ।

मातङ्गी कमलाचैव सिद्धविद्या: प्रकीर्तिता:।।

काली, तारा, षोडशी, भुवनेश्वरी,छिन्नमस्ता, त्रिपुरा-भैरवी, धूमावती, बगलामुखी, मातङ्गी ,कमला एता एव दशविद्यानां नाम तासु भुवनेश्वरी चतुर्थी । अत्र तस्या एव साहित्यस्य स्वरूपस्य च स्वरूपविवेकं तन्त्रशास्त्रविशालतां तोषार्थमुपस्थाप्यते ।

तन्त्रग्रन्था:

भुवनेश्वरीमधिकृत्य तत्र ग्रन्थाह्यधिका न सन्ति । ये सन्ति तन्मध्यत एव भुवनेश्वर्या: स्वरूपस्य पूजायाः आचार्या: मन्त्रयन्त्रादेर्विवरणं पर्याप्तरूपेणोपन्यस्तं विद्यते ।

---

(ख) शक्तीनां स्वरूप विभेदः

व्यावहारिकोपलब्धिका कल्पितानन्तकोट्या कापि शक्तिपर्यायविलक्षणता नारदनोक्ता शक्तिसत्ता भवति । भगवती शक्तिस्वरूपतत्त्वनिरूपणे -- परस्य शक्तिविधुरेव भूतो निर्गुण परमात्मा तु सदा स्वकात्मस्थितः तस्य भट्टारिका-सित्वं भुवनेश्वरीभोगदा कुलपराशक्तिरस्ति। इन्द्रोमायाभिः पुरुरूप ईयते । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं परमा प्रकृतिस्त्वमाद्या इति मार्कण्डेयपुराणे व्यापका नित्या सर्वस्वरूपत्वात् देशकालवस्तुकृत् शक्ति-परिच्छेद एव । अर्थात् कुत्रापि शक्तिस्वरूपनिर्णये तत्कृताभावो नास्ति कदापि तस्या ध्वंसो नास्ति केष्वपि वस्तूनां मध्ये तस्या भेदो नास्ति । अघटित घटनाविघटनानिर्माणातिनिपुणचिदाभासाने प्रकारसंसारसारदर्पण-नगरे अनेकानेकप्रकार कार्यकारणभाव क्षणभङ्गुरबुद्धि स्वप्न बोधयुता ऐन्द्रजालिक वत् तत्प्रकाराणां रचनागर्भधारिणी मायाशक्तिस्वरूपेतिनानापुराणे सारोद्धारे प्रतिपादिता ।

अथैतदनिर्वचनीयं कारणं यथा-- प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं यत् न गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः मन्यन्ते । अथच --

तद्यथा --

अजामेकां लोहितशुक्लकृष्णामिति श्रुतेः

हेतुःसमस्त जगतां त्रिगुणापीति मार्कण्डेयपुराणानुसारोद्धारे ।

एवमेव एषा मायाऽऽ स्वात्म्यातिरिक्तानि क्षेत्राणि दर्शयित्वा अविनाशभावेन करोति । चितिः स्वतन्त्रा विश्वसिद्धि हेतुरेककारणमिति शक्तिसूत्रम् ।

कथं कातु किमर्थं तत् करोषि केन हेतुना नाहं जानामि तदेव वद यतोऽहं हि त्वद्रूपमेवेति शक्तिदर्शनं मायाख्यायाः कामधेनोर्वैरक्ती एव बोधेस्वराम्भो इति शक्तितत्त्वविमर्शिनी ।

शक्तिश्च शक्तिमद्रूपाद्व्यतिरेकं न वाञ्छति, तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिवेति शक्तिदर्शने शक्तीनां स्वरूपविवेचनम् ।

अचिन्त्य अमिताकार शक्तिस्वरूपा प्रतिव्यक्त्याधिष्ठानसत्त्वैकमूर्ति-गुणातीतनिर्द्वन्द्वबोधैकगम्या त्वमेका परब्रह्मरूपेण प्रसिद्धासिद्धा चेति नाना-पुराणसारोद्धार मतम् । सा सदैकत्वं न भेदः अस्ति सर्वदैव ममास्य योऽसौ सोऽहमहं योऽसौ भेदोऽस्ति अस्माकं मतिविभ्रमात् ।

सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवी साब्रवीदहं ब्रह्मरूपिणी मत्तः प्रकृतिपुरुषात्मकं जगदुत्पन्नम् । इति श्रुतिः स्वर्थवादविचारः ।

शक्ति तत्त्वान्तरात् भिन्नं नास्ति , शक्ति तथा शक्तिमानस्य सम्बन्ध- वह्नि तथा दाहकता शक्तये अभेदसदृश एव अतः सा सर्वथा अभेदवानीति ।

तस्य प्रमाणं -- प्राधेण वैमिनाक्ष्यन्यायादिभ्यः इति ब्रह्मसूत्र- वचनात् पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति श्रुतेः न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात् । मुक्तावन्तापुरैव त्वं भुवने- श्वरि । तिष्ठसि इति शक्तिदर्शने न्यायेन 'माया नित्या कारणञ्च सर्वेषां सर्वदा किल'[1]।

नित्यैव सा जगन्मूर्तिः[2] ।

प्रकृतिः पुरुषश्चेति नित्यौ बाबाभ्यां पिशितं रक्तं सुरां चापि महेश्वरि वर्णाभिमोक्षितं धर्मनिवाणं यन्ति, ये भूतप्रेतपिशाचास्ते भवन्ति ब्रह्मराक्षसाः ते वर्णानुकूलभेदेन द्रव्यभेदा भवन्ति ।

नानापुराणेषु पराशक्तिस्वरूपस्य विवेचनं इत्थं रूपेण वर्णितम् -- यस्याद्दृष्टो नैव भूमण्डलांशो यस्यादाषो विद्यते न पिपासाः यस्याशातं नैव शास्त्रं किमन्ये यस्याकारः सा पराशक्तिरेव ।

- - - - - - - - - - - - - - - - - -

१- देवीभागवत् - ७।३३।२९

२- मार्कण्डेयपुराण ८।३९ ।

तं विलोक्य महेशानि सृष्ट्युत्पादककारणात् ।यस्यादृष्टो नैव भूमण्डलान्तो यस्यादातो विपते न शितांशः यस्याशार्तं नैव शास्त्रं किमन्यैः यस्याकारः सा पराशक्तिरेव । शक्तिनाथं मानसिकं स्वमतीं प्रकल्पयेत् ।

वेदुषस्य शक्तिवादं स्वीकुर्यते चेत् तदा शक्तिनां प्राधुर्यं विकासाय अनन्ताथकाशो अनुभूतो । जीवानां सर्वं परमशक्तिं प्राप्तमस्ति । सा शक्ति नित्या सकारमातापन्नेव सरस्वती स्वाधिष्ठान्वितात् निरस्त दुस्तर्ककलङ्क-पङ्का नमामि त्वां शङ्करमर्चिताङ्घ्रिम् । सैव पराविद्या शक्तिब्रह्मस्व-रूपिणी आत्मप्रकाशिका परमदेवीस्वरूपा च ।

या देवी सर्वभूतेषु विद्यारूपेण संस्थितेत्यादि ।आचार्यैः विद्या विदिता आविष्टं प्राप्त या पराविद्या शान्तादान्ता श्रुतिपूर्णकर्णाः जितेन्द्रियाः प्राणिवधान्निवृत्ताः प्रतिग्रहे सङ्कुचिताग्रहस्तास्ता जीवानां तारयितुं समर्थाः ।

जीवानामन्तःकरणे या उदात्ता दिव्याशक्तिरस्ति तेषां समष्टिनां नाम कुण्डलिनीशक्ति, कुण्डलिनीशक्तिजीवानामन्तःकरणे स्थिता जीवात्मानं तारकरूप शक्ति एव । यथैव श्रुतिसिद्धान्तः असतो मा सद्गमय, तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमय । चिदग्निकुण्डसम्भूता देवकार्यसमुद्यता भण्डसैन्य-वधोद्युक्तशक्ति विक्रमहर्षिता सहस्रारम्बुजारूढा सुधासाराभिवर्षिणी ।

सा शक्ति अग्नौ विप्राणां तिष्ठति हृदि देवो मनीषिणाम् प्रति स्वप्नज्ञानां सर्वत्र विदितात्मनाम् । भावग्राह्यतान् सा देवि सर्वाधारांश्च चैव सा शक्तिमनस्युत्पद्यते विभेद भावो मनसि हि प्रतीयते, यथेन्दु गुडमाधुर्यं रसना ज्ञायते तथा विभेद भावो महादेव मनसा परिभाव्यते । भावविभेदेन चुम्बिता कान्तानेक भावेन । जीवा शक्तिभावेन सर्वं लभते कान्ताभावेन दुहितानां भावेन सर्वं लभते परमं शान्तं तस्माद्भावावलम्बनं ये यत्राधिकृता मर्त्याः ते तत्र फलभागिनं भवति। गतकिल्विषा मानुषा शक्तिदापनेव संसारतरणिं तरिष्यन्ति । मूलशुद्धि ध्यानपूजाजपध्यानधारणा भावेन जीवानां मुक्तिर्लभ्यते । बहुजापात् होमात् कायक्लेशादि भावेन विना देव यन्त्र मन्त्रै-विना न फलप्रदा भवति ।

शक्तीनां स्वरूपविभेदे एकैवाहं जगत्यत्र द्वितीया का ममापरेति मार्कण्डेयवचनेन सम्पूर्णं संसारे चैतन्यशक्ति, ज्ञानशक्ति समस्तानां जीवानां विकासे क्रीडाशक्तिरेव सर्वोपरि महाशक्ति वर्तन्ते । सा महाशक्ति वर्णरूपा -- अकारादिक्षकारान्ता मातृकावर्णस्वरूपिणी यया शक्त्या इदं सम्पूर्णं त्रैलोक्यं व्याप्तमासीत् ।

सा सुधासिन्धोर्मध्ये सुरविटपवाटीपरिवृते मणिद्वीपे चिन्तामणि-गृहे नीपोपवनवति, शिवाकारे मण्डपे परमशिवपर्यङ्कनिलयां भवन्तीं त्वां धन्याः कतिचन चिदानन्द लहरीं ब्रह्माण्डं चेतयन्तो । त्रिविधदुर्नृपान्नृणां तर्पयन्तो रस प्रवाहैः । सा यदा प्रीता सन्दीपयन्ती निजनिज चित्तैः सद्गुणान् प्रेरयन्ती ।

सा शक्ति वर्णान्देवान् जनन्ती त्रिलिङ्गलक्ष्मणी साऽपि अहङ्कार-कर्त्री ईशां तस्यैव जाड्यं जीवानां स्वरचिततनुते मोचयेत् पापनात् ।

कालीतारा महाविद्या षोडशी भुवनेश्वरी भैरवी छिन्नमस्ता धूमावती विद्या मातङ्गी सिद्धविद्या भेदेन दशधा तान्त्रिकी महाविद्याश्चित सर्वतन्त्रेषु तथा नानापुराणसारोद्धारे च प्रतिपादिता । सिद्धविद्याधराणां सुराणां शरणं ऋषिमुनिकुमाराणां व्याधिभिःपीडितानां नृपतिनृपसुतानां दस्युभिः त्रासितानां सा शक्ति एकामपि शरणम् ।

सा अव्यक्ताद् सर्वाः व्यक्तयः प्रभवन्ति अहरागमे रात्र्यागमे सा प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके आत्मतत्त्वशक्तिविद्याये सर्वं खल्विदं ब्रह्म भूमिरापः अनल वायुः खं मनः बुद्धि अहंकार इति अष्टधा प्रकृतिशक्तिः । या देवि सर्वभूतेषु शक्तिरूपेण संस्थिता चेतनाशक्ति विकास मन्त्रः । सर्वस्वरूपे सर्वेशे

सर्वशक्तिसमन्वितं तस्य सर्वस्य या शक्ति सा त्वं चेतनाशक्ति विभेद: ।

शक्तितत्वस्वरूपविभेदाख्याने -- ब्रह्म वस्तीवशक्तिसहयोगेन गुरुणा: निर्गुण सगुणाशक्ति योगात् । एकादनेकत्व वर्शनात् सर्गविभेद:, व्यक्तात् सर्वशक्तिमानत्व शक्तियोगात्, अक्रियात् कारुजन्मादिक्रिया वेद उक्त: मुक्तिरूपेत: प्रतीयते शक्तियोगात् । आद्या शक्तिं उपास्य ब्रह्मरूपमन्यते नानापुराणसारे । ते ध्यानयोगानुगता अपश्यन् इति कण्ठिच्छ्वासिपन्यो शक्तितत्व दर्शध्यानयोगात् । शक्तिभक्तियात् भक्तशक्तियुक्तो भवति । पराशक्ति भक्तिहीन: स्यात् तदा शक्तिहीनं मन्ये ।

भुक्तिमुक्तिहेतु शक्ति मार्ग न इष्टदेव: । ब्रह्मा विष्णु रुद्रादि देव: शक्त्यादेव शक्तिमान: । आमरणशक्ति चरणशरणेव तरण निर्वाचिकम् । सा शक्ति अध्यनपुरपूर्तिनिमित्तया इदं जगतं जगत् पुष्टपुष्पके । स्पन्दते च स स्पन्द: प्रथम: एषा शिवशक्तितत्वमुच्यते । सैव इच्छाशक्ति स्वच्छास्वन्त-तसमवायिनी सती शक्ति: सचराचरस्य जगत: बीजं निखिलस्य निधनिनस्य सच्चिदानन्द विभवात् स्वात् परमेश्वरात् आसीच्छक्तिविभेद: ।

शक्ति शक्तितत्व भगवतीशक्ति, महाशक्ति रहस्यशक्ति सामर्थ्य-शक्ति मातृशक्ति, शक्तिमानशक्ति,शिवशक्ति,साधनाशक्ति,भाद्रशक्ति, शक्तिशक्तिमानयोरभिन्नता उपासनाशक्ति, दशमहाविद्याशक्ति भोगियाशक्ति,

मोक्षविल्वशक्ति, शाक्तमार्गशक्ति, सर्वव्यापकशक्ति, स्वरूपशक्ति, महाशक्ति, अभेदशक्ति, मोहशक्ति, राधिकाशक्ति, सीताशक्ति, परात्परशक्ति, सीतातत्त्वशक्ति, ताराशक्ति, कात्यायनी शक्ति, षष्ठी तथा गीताशक्ति, उपनिषदोक्त तत्त्वशक्ति, गायत्री शक्ति, विद्याशक्ति, महाशक्ति, विज्ञानशक्ति, ब्रह्मविद्याशक्ति, ध्यानशक्ति, धारणाशक्ति, नादबिन्दुकलाशक्ति, कुण्डलिनीशक्ति, परा तथा अपराशक्ति, कुण्ठशक्ति, राष्ट्रशक्ति, वाक्शक्तिरनन्ताऽव्यक्तापदाद्व्यक्तप्रमाणाः ।

चैतन्यस्य न दृश्यत्वं दृश्यत्वे जडमेव तत् ।
स्वप्रकाशञ्च चैतन्यं न परेण प्रकाशितम् ॥[1]
न विष्णुर्न हरः शक्तो न ब्रह्मा न च पावकः ।
न सूर्यो वरुणः शक्ताः स्वे स्वे कार्ये कथञ्चन ॥
तया युक्ता हि कुर्वन्ति स्वानि कार्याणि ते सुराः ।
एवं सर्वगता शक्तिः सा ब्रह्मेति विविच्यते ।[2]

---

१- देवीभागवतम् १२।७।३२
२- ,, ,, १।८।३६

रावणं प्रति सीतोक्तिवाक्यं श्रीमद्वाल्मीकिरामायणे[१] --

शक्या लोभयितुं नाहमैश्वर्येण धनेन वा

अनन्या राघवेणाहं भास्करेण यथा प्रभा ।

उपधाय भुजं तस्य लोकनाथस्य सत्कृतम्

कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ।

विदितः सर्वधर्मज्ञः शरणागतवत्सलः

तेन मैत्री भवतु ते यदि जीवितुमिच्छसि[२] ॥

सावित्री यमं प्रतिवाक्यम् --

यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति

मया च तत्र गन्तव्यमेष धर्मः सनातनः ॥

---:0:---

- - - - - - - - - - - - - - - - - -

१- देवीभागवतम् ९।८।३४

२- वा०रा० सुन्दरका० ७।११

# चतुर्थोऽध्यायः

## शक्ति-सिद्धपीठानि तेषां पौराणिकं महत्वञ्च

## शक्ति-सिद्धपीठानि तेषां पौराणिकमहत्त्वम्

- - - - - - - - - - - - - - - - - - - - - - - - -

पौराणिकी सिद्धशक्तिपीठानां महत्त्वं जीवानां कृते भवति यत् शरीरे प्राणवायुः ।

पूर्वं कौशिकीशाल्मलीमध्ये पुण्यः काषायपर्वतः'

(स्कन्दपुराणे,मानसखण्डे ५८।३।१२)

अत्र अधुना अल्मोडाप्रान्ते कौशिकी नामा पीठस्थानमस्ति ।

द्वितीयं तावत् यत्र स्थानमस्ति तत्र अर्बुदा देवीमन्दिरमस्ति सा द्वितीया पीठस्थाना । गणेश जननी दुर्गा राधा लक्ष्मी:सरस्वती सावित्री सृष्टिविधौ प्रकृति: पञ्चधा आविर्भूव , सा केन का वा सा शक्तिनां वर, किं वा तत्कार्णं स्थानं, सर्वेषां चरित्रं पूजा विधानं गुण इच्छित, तेषां अवतार: बहु: कथास्तस्मै विस्तृतं व्याख्यातुं नार्हसि ।

**प्रधानशक्तिपीठानां परिचय:**

विष्णुचक्रेण संछिन्नास्तद्देहावयवा: पृथक् ।

निपेतु: पृथिवीपृष्ठे स्थाने स्थाने महामुने ।।

महातीर्थानि तान्येव मुक्तिक्षेत्राणि भूतले ।

सिद्धपीठा हि ते देशा देवानामपि दुर्लभाः ।।

भूमौ पतितास्तेषु छायाङ्गावयवाः क्षणात् ।

बभूवुः पाषाणतां सर्वलोकानां हित हेतवे ।।

दक्ष प्रजापतेर्यज्ञकुण्डे दग्धीभूताः सतीशरीरावयवाः विष्णुचक्रेण संछिन्नाः यत्र यत्र निपतिताः तत्र तत्रत्यं स्थानं शक्तिपीठ रूपेण परिणतम् । तेषां परिचयः देवीगीता, देवीभागवत्, तन्त्रचूडामणिस्तथा तत्र च तन्त्रचूडामणिग्रन्थे ५२ सिद्धपीठानां शिवचरित्रग्रन्थे एक पञ्चाशत ५१ श्रीमद्देवीभागवते अष्टोत्तर शत १०८ सिद्धपीठानां चर्चा, कालिकापुराणे षड् विंशति उपपीठानां चर्चा विद्यते, तेषांमध्ये अकारक्रमेण वर्णितानां सिद्धपीठानां चर्चा इह प्रस्तूयते ।

(१) कौशिकी :

भारतवर्षहृदयभूतस्योत्तरप्रदेशस्य अल्मोड़ा जनपदे कौशिकी-शाल्मली-नद्योरन्तराले काषायपर्वतोपरि कौशिकी देव्याः सिद्धपीठो वर्तते वर्णितमस्ति।

(२) अर्बुदा देवी :

एक पञ्चाशत परिगणितेषु शक्तिमहापीठेषु परिगणितेदं स्थानं आबूपर्वतस्य अतीवोन्नते शिखरे शिखिरगह्वरे चास्ति । तत्र गमनार्थं सोपानस्य सुव्यवस्थिता व्यवस्था वर्तते । गह्वरान्तराले अखण्डप्रदीपस्याहर्निशं व्यवस्था

वर्तते । तत्प्रकाशादेव देव्याः दर्शनं भवति । चैत्रीपूर्णिमायां आश्विनमासस्य विजयादशम्यां तिथौ देव्याः दर्शनस्य अतीव महिमा वर्तते । उत्सवावसरे अतीव जनसम्मर्दं भवति ।

(३) हरसिद्धिमाता :-

मध्यप्रदेशस्य उज्जयिनीनगर्याः महाकालेश्वरात् तथा संस्कृत-संस्कृत्योराधारभूतस्य विक्रमादित्यस्य महाराजाधिराजस्य च औदार्यात् सम्मानस्य यत् महत्त्वं भारतवर्षीय पत्तनेषु विद्यते, तादृशं नान्यस्यासु प्रतिष्ठा विद्यते । द्वादशज्योतिर्लिङ्गेषु प्रख्यातस्य महाकालेश्वरस्य समीप एव रुद्रसागर-पुरोवरस्य अपरतटे महाराजविक्रमादित्यस्य कुलदेव्याः हरसिद्धिमातुरतीव प्राचीनं मन्दिरं वर्तते । सिद्धशक्तिपीठस्यास्य अनेके चमत्कारपूर्णाः अनुभवाः कर्णगोचरा भवन्ति । अत्र अनेकानुष्ठान निष्ठाः साधकाः समागत्य स्व मनोरथानुरूपमनुष्ठानं विधाय स्वाभिलषितामिच्छां पूरयन्ति ।

(४) सप्तमातृका शक्तिपीठम् :-

मान्धातापर्वतस्योपत्यकायां ओंकारेश्वर शिवस्य प्रसिद्धं द्वादश-ज्योतिर्लिङ्गस्यान्यतमं स्थानं विद्यते । शिवमन्दिरस्य सार्धैकक्रोश दूरे पूर्वभागे पुण्यतोया नर्मदायास्तटे सप्तमातृकायाः महत्त्वपूर्णं सिद्धपीठं वर्तते । सप्तमाता इति नाम्ना प्रसिद्धोऽयं पीठो वस्तुतः सप्तमातृकापीठ इति शास्त्रेषु

वाक्यग्रन्थेषु परिलक्ष्यते । तेषां अभिधानन्तु — ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, नारसिंही ऐन्द्री चास्ति । सिद्धपीठस्य महत्त्वानुसारं स्थानस्यास्य रमणीयकम् दर्शनार्थिनां हृदयावर्जकं विद्यते ।

(५) महाकाली :

महामाया परम्परायाः उपासकाः यद्यपि भारतीयाः शाक्ताः सर्वत्रैव भारतवर्षे सन्ति। परन्तु वङ्गप्रदेशः शक्तिसमुपासनायां दृढतरो विद्यते । वङ्गप्रदेशस्य उत भारतवर्षस्य महत्सु नगरेषु कलिकातानगरी अन्यतमं स्थानं गृह्णाति । तस्यैव महानगरस्य भगवत्या भागीरथ्या,आदि-स्रोतसि कालीघट्टेति प्रसिद्धं स्थानं विद्यते । तत्रैव विश्वाराध्या भगवत्याः काल्याः प्रसिद्धं कालीमन्दिरं विद्यते । अस्य स्थानस्यापि परिगणना सिद्ध-पीठेषु शक्तिसमुपासकैर्गुणो क्रियते । सम्पूर्णे वङ्गप्रदेशस्था पुरुषाः नार्यश्च परमाराध्यायैनामाराध्यितारः सम्भवन्ति कालीभक्तस्य सन्त-शिरोमणेः श्रीरामकृष्णपरमहंसस्य विशिष्ट कालीकृपाकटाक्षप्राप्तेश्चरितकथा नाविदितं लोकानां विदुषामपि ।

(६) गुह्येश्वरी सिद्धपीठम् :

भारतवर्षस्य संस्कृतेरङ्गभूतस्य नयपालितस्य नेपाल राज्यस्य राजधानी काठमाण्डू नगरस्य वागमती नद्याः गुह्येश्वरी घट्टस्य नी-पशुपतिनाथमन्दिरस्य नातिदूरे गुह्येश्वरी देव्याः सिद्धपीठम् वर्तते । सम्पूर्णनेपालराज्यस्य प्रजा परमा भक्त्या एनां समाराधयन्तीति ।

(७) भगवती कालिका :

हिमालयस्योपत्यकायां भारतवर्षस्योत्तरपश्चिमप्रकोणे कालिकानामक सिद्धस्थानं विद्यते। अत्र भगवत्या कालिकायाः प्राचीनं सुप्रसिद्धं देवायतनं वर्तते । भगवत्या शरीरकोशान्निःसरणात् कौशिकी देव्याः प्रादुर्भावो जात इति उपरिनिर्दिष्टम् । तदनन्तरम् -

तस्यां विनिर्गतायां तु कृष्णाभूत् सापि पार्वती ।

कालिकेति समाख्याता हिमाचल कृताश्रया ।।

अतः श्यामवर्णा गौरी एव कालिकादेवीति ख्यातनामा ।

(८) काशीस्थ सिद्ध-पीठानां संस्तव:

काश्यां ये शक्ति त्रिकोणाः सन्ति तेषां मध्ये महामाया दुर्गा-महालक्ष्मी- महासरस्वती(वागीश्वरी) देव्यास्तत्र चर्चिता विद्यते । त्रयाणां शक्तिपीठानां पार्श्वतः एकैक कुण्डस्य स्थितिः काशीखण्डोक्ता विद्यते ।

दुर्गाकुण्डस्य लक्ष्मीकुण्डस्य च स्थितिस्तु इदानीमपि दृश्यते परन्तु वागीश्वरी-कुण्डस्य समाप्तिर्जाता । त्रयाणामपि शक्तिपीठानां पार्श्वतः क्रमेण भदैनी, रामापुरा, जैतपुरा इति काशीस्थ खण्डस्य नामकरणं जातम् । शक्तिपीठ-त्रयातिरिक्तं काश्यां पार्श्वेन नवदुर्गा मन्दिरं (शैलपुत्री,ब्रह्मचारिणी,चन्द्र-घण्टा-कुष्माण्डा,स्कन्दमाता, कात्यायनी, कालरात्रि-महागौरी,सिद्धिदात्री) विद्यते । यत्र नवरात्रेषु दिनक्रमेण दर्शनोत्सवं भवति । कुष्माण्डा तथा स्कन्दमाता, पूर्वोक्ता भगवती दुर्गाकुण्डस्थिता दुर्गा एवं वागीश्वरीदेवी एव गृहीता सन्ति। महागौरी पदेन काश्या अधिष्ठात्री भगवती अन्नपूर्णा एव विद्यते । अतः अतिरिक्तं चौसट्टी-काली-विशालाक्षी-वाराही-त्रिपु-रामङ्गलागौरी-संकट-पीताम्बरा प्रभृतयः सिद्धपीठाः वाराणस्यां सन्ति । पूजाराधकाः स्वकीयामाराधना विधाय विविधामभिलाषां लब्ध्वा देवी -गुणैः सम्पन्ना सम्भवन्ति ।

(९) विंध्येश्वरी पीठम् :-

पाञ्चालप्रदेशस्य पठानकोटनगरास्यान्तिके काँगड़ा इत्याख्यमेकं नगरमस्ति। अत्रैव भगवती विन्ध्येश्वर्याः प्राक् कालिकं मन्दिरं विद्यते ।देव्याः प्राचीनं मन्दिरं ख्रीस्ताब्दे १९०५ ईस्वीये भूकम्पेन ध्वस्तम् इदानीं काचित् धार्मिक संस्थया अस्य पुनर्निर्माणो प्रचलति । स्थानमिदं शक्तिपीठेष्वन्यतमं

विद्यते । तत्र भगवत्या सती देव्या पृष्ठस्य पतनम् जातम् । मूर्तिरपि पृष्ठमयी विद्यते । भगवत्याः सम्मुखस्य एव रौप्यमण्डिते स्थाने प्रतिष्ठायन्त्रस्योल्लेखो वर्तते ।

देव्याः मन्दिरस्य प्राङ्गणे एकस्य कुण्डस्य स्थितिः यस्य पार्श्वे विविधा यूपस्तम्भाः संस्थापिताः सन्ति ।

(१०) महालक्ष्मीपीठम् :

महाराष्ट्रप्रदेशस्य कोल्हापुरस्थान विशे देवीभागवते- मत्स्यपुराणे- ऽपि च महालक्ष्म्याः स्थानत्वेन निर्दिष्टमस्ति। स्थानमिदं शक्तिसिद्धपीठेष्वन्यतमं महाराष्ट्रप्रदेशस्य च प्रमुखं शक्तिपीठरूपेण स्वीकुर्वन्ति । तत्र प्रत्यब्दं लक्षाधिका दर्शनार्थिनो समागत्य भगवत्या महालक्ष्म्या दर्शनेन सफलकामा कृतार्थश्च भवन्ति ।

(११) गन्धर्बलस्था क्षीरभवानी पीठम् :

भारतवर्षस्य स्वर्गतुल्यरमणीयस्य कश्मीरप्रदेशस्य राजधानी श्रीनगरस्य ८ क्रोशपरिमितं उत्तरभागे भवान्याः योगमाया क्षीर भवानीति ख्यातं सिद्धपीठं वर्तते । मन्दिरस्य परितः जलम् तन्मध्य एव मन्दिरस्य स्थितिः। ज्येष्ठशुक्ल अष्टम्यां तत्र महोत्सवं भवति। मन्दिरस्य परितः कुण्डजलं समय- समय परिवर्तनं भवति येन शुभस्य अशुभस्य च तज्ज्ञाः भविष्यफलं कुर्वन्ति ।

(१२) अम्बादेव्याः पीठम् :-

काठियावाड़प्रान्तस्य सुप्रसिद्धम् अम्बादेव्या मन्दिरं जूनागढ़ राज्यस्य गिरिनार पर्वतस्योपरि विद्यते। पर्वतारोहणमतीव दुष्करं निर्मितेन सोपानमार्गेण प्रायः चत्वारिंशत्सहस्र सोपानमतिक्रम्य पर्वतस्य शिखरत्रयाणां यात्रा पूर्णा। चतुःपञ्चसोपानानामन्तरा विस्तृतस्य सोपानस्य निर्माणं विद्यते, यस्योपरि यात्रिणः विश्रम्य अग्रे उपरि च गच्छन्ति। पर्वतस्यास्य त्रिषु शिखरेषु क्रमेण अम्बा देव्या, गोरक्षनाथस्य दत्तात्रेयस्य च स्थानं विद्यते। अम्बादेव्या विशालाकारामूर्तिः भयानकेऽस्मिन् वन्यप्रदेशे अतीव उग्रा प्रतीयते। अरण्येऽस्मिन् सिंहा सन्ति। अस्मिन्नेव पर्वतस्य एकस्मिन् गह्वरे कालीदेव्या अपि प्रतिमा विद्यते, यत्र अनेकाः उपासका उपासनायां दत्तचित्ता दृश्यन्ते।

(१३) कामाख्या सिद्धपीठम् :-

असमप्रदेशस्य गौहाटी नगरस्य क्रोशमात्र परिमितं पश्चिमभागे नीलगिरि अथवा नीलकूटपर्वतस्य उपरि प्रधानं सिद्धपीठं वर्तते। अत्र भगवती कामाख्या इति नाम्ना व्यपदिश्यते। कालिकापुराणानुसारं अस्मिन् स्थाने सतीदेव्या योनिस्थानस्य पतनं जातं अतः अवश्यं प्रधानतीर्थं एकस्मिन् अन्धकारपूर्णं गह्वरस्य मध्ये स्थितं योनिपीठं वर्तते। अस्मिन् स्थाने केवल कुण्डमात्रं विद्यते। यत् पुष्पैः आच्छादितं वर्तते। समीप एव एकस्मिन्मन्दिरे

भगवत्या प्रतिमा अपि वर्तते । पीठोऽयं महादेवीपदेन व्यपदिश्यते ।एतादृशं भगवत्या पीठं विन्ध्यवासिनी दीर्घं तथा ज्वालामुखी एव वर्तते । अस्मात् स्थानात् अष्टक्रोशपरिमितं सुप्रसिद्धं कामरूप नामकं स्थानं विद्यते ।यत्रोपत्रत्या-स्थितानां नारीणां विषये विविधा ऐन्द्रजालिक कथाश्रुतयः श्रूयन्ते ।

(१४) चटगाँवस्य चटग्रामे सीताकुण्डस्य भगवती भवान्या पीठं :-

चटग्रामस्य चटग्रामनगरात् मात्र क्रोशद्वयं सीताकुण्डनामकं तीर्थ-स्थानं विद्यते । तत्पार्श्वे एव चन्द्रशेखरपर्वतस्य शिखरोपरि भगवती भवान्या सुप्रसिद्धं सिद्धं च मन्दिरं विद्यते । अस्य गणना एकपंचाशत परिगणितेषु शक्तिपीठेषु वर्तते । अस्मिन् स्थाने वाडवकुण्डे अहर्निशं अग्निर्निःसरति तथा तथा तत्पार्श्वे एव प्रस्तरतोऽपि वह्निः निःसरति ।

(१५) चित्तौडस्य भगवती कालिकायाः पीठं :

राजस्थानप्रदेशस्य चित्तौड़ इति सर्वजनसुविदितमैतिहासिकं दुर्ग-स्थितस्मिन्नेव दुर्गे भगवती कालिकायाः प्राक्तनं सिद्धपीठं वर्तते ।एतत् नाम श्मशानकालीति यदि व्यपदिश्यते तथापि न काचित्हानि,यतोहि अस्य दुर्गस्य रक्षायां स्व प्रतिष्ठासंरक्षणे च राजपूत वीरांगना अग्नौ स्वशरीरं दग्धा कृताः । मन्दिरेऽस्मिन् अहर्निशं अखण्डदीपः प्रज्वलति तथा अत्र प्रतिस्तम्भोपरि अनरम्भिताः प्रतिमा विराजन्ते ।अस्मिन् दुर्गे

तुल्या भवानी तथा अन्नपूर्णायाः अपि मन्दिरं विद्यते ।

(१६) चिन्तापूर्णी :

जालन्धरनगरात् ज्वालामुखीमार्गे होशियारपुरतः १५ क्रोशदूरे भगवती चिन्तापूर्णायाः सदनं पर्वतीयप्रदेशे स्थितोऽस्ति । सुप्रसिद्ध काँगड़ो-पत्यकायां यानि उचित त्रिकोणानि सन्ति, तस्य प्रतिशिखरे क्रमशः चिन्ता-पूर्णी- ज्वालामुखी-काँगड़स्था विन्ध्येश्वरी विराजिताः सन्ति। त्र्योऽपि पीठाः सिद्धशक्तिपीठस्वरूपेण समाराधकाः स्वीकुर्वन्ति ।

(१७) चुनारस्था भगवती दुर्गा :-

वाराणसी निकटस्थ एव विन्ध्यपर्वतस्य उपत्यकायां स्थितः चुनार इति प्रसिद्ध स्थानम् विद्यते । तदन्तिक एव विन्ध्यपर्वतस्य एकस्यां कन्दरायां भगवत्या दुर्गायाः सुरम्यं स्थानं विद्यते । मन्दिरस्य प्रवेशमार्गं गवाक्षरूपं संकीर्णं विद्यते। तत्र एव उभित्वा देव्याः सदने प्रवेशो भवति । दुर्गा-मातुः प्रतिमा अतीव श्रद्धोत्पादिका वर्तते । सिद्धपीठोऽयम् देव्याः समाराध-नाय सिद्धस्थानं सिद्धपीठं वर्तते ।

(१८) जनकनन्दिनी जन्मस्थानम् :

जनकपुररोड रेलवे स्थानागमनानन्तरम् इदानीं नेपालराज्यान्तर्गते अस्मिन् स्थाने गमनं भवति। अत्रैव जगज्जनन्याः सीतायाः प्रादुर्भावो जातः। अतः एक सिद्धपीठत्वेनेदं स्थानमङ्गी क्रियते ।

(१९) जाबालिपुरम् :-

जाबालिपुरतः षट्क्रोशपरिमितं दूरतो नर्मदायाः प्रपातविशेषः भेड़ाघट्टस्थः विद्यते । नर्मदायाः स्फटिकशिलोपरि गौरीशङ्करदेवालयस्य मध्ये चतुःषष्टियोगिनीनां स्थानं विद्यते । प्रतिमानां निर्मितिः तन्त्रोक्तविधाः जातस्तथा सर्वाः प्रतिमा मनुष्याकारेण संस्थापिताः सन्ति । अतीव कष्टस्यायं विषयः यत् प्रतिमा प्रतिमन्ववेर्यवनाततायिभिः तेषां घोटनं कृतमिति ।

(२०) ज्वालामुखी :-

देव्याः प्रसिद्धसिद्धपीठोऽयम् - आराधकानां सर्वथा आकर्षकं विद्यते। अत्रत्या विशेषता यदहर्निशम् अनादिकालतः भूगर्भात् वह्निज्वाला निःसरति।

(२१) जालन्धर :-

शाक्तेषु शक्तिसिद्धपीठानां वर्णने, अस्य स्थानविशेषस्यापि चर्चा विद्यते । परन्तु नगरेऽस्मिन् कस्यापि शक्तिपीठस्य तादृशं स्थानं नोपलभ्यते । अनुमीयते यत् प्राचीनजालन्धरतः त्रिगर्तप्रदेशे (वर्तमान् कांगड़े की घाटी) चिन्तापूर्णी, ज्वालामुखी, नगरकोटिदेवी स्थानतः यत शक्तित्रिकोणं भवति तदेव सिद्धपीठ परिगणनायां कारणं भवति ।

(२२) <u>पद्मावत्याः सिद्धशक्तिपीठम्</u> :-

तिरुपति बालाजी ति नाम्ना प्रसिद्धं तीर्थस्थानं दक्षिणभारतस्य महातीर्थं विद्यते । ततः सार्धक्रोश दूरं चिन्तापुर इति स्थाने पद्मावत्याः सिद्धशक्तिपीठं वर्तते यस्य माहात्म्यमतुलं लोकोपरं च वर्तते ।

(२३) <u>द्वारका</u> :

भारतवर्षे जगन्नाथपुरी- सेतुबन्धरामेश्वर-बद्रिकाश्रम इति प्रसिद्धेषु चतुर्धामसु द्वारकाधामे श्रीरुक्मणीदेव्यास्तथा सत्यभामायाः देवस्थानं विद्यते । यस्य माहात्म्यं लोकोपरं विद्यते ।

(२४) <u>देवीपाटनेय पटेश्वरी पीठम्</u> :-

एतादृशी जनश्रुतिः श्रूयते यत् महाभारतकाले महारथी कर्णद्वारा पटेश्वरी देव्याः संस्थापनमभूत् । देवद्विजप्रियः सम्राट विक्रमादित्यः तीर्थोद्धारा-वसरे अत्र द्वितीयं देवीमन्दिरं निर्मितः । कालान्तरं नाथसम्प्रदायस्य सिद्ध-कर्णयोगिनामधिकारो मन्दिरोपरि जातः यत् अद्यावधिरपि तेषामेव संरक्षणं प्रचलति । पटेश्वरीदेव्याः मन्दिरं एकस्य उन्नतभूभागोपरि स्थितं विद्यते, तत् समीप एव जलपूर्णं कुण्डमध्येऽप्यस्ति, चतुर्नवरात्रिषु जातीयमहोत्सवं अत्र भवति ।

(२५) योगमाया तथा कालिकापीठं :

भारतवर्षस्य प्राचीनकालीना तथा आधुनिककालीना इन्द्रप्रस्थ (देहली) इति कथितस्य महानगरस्य मध्ये द्वौ शक्तिपीठौ स्त: । कुतुबमीनारस्य पार्श्वे योगमायाया मन्दिरं, या योगमायापृथ्वी राजस्य ईष्टदेवी आसीत् । मन्दिरस्य मध्ये काचित् प्रतिमा नास्ति केवल कामाख्यापीठवत् भगवती योनिरूपा एव विराजमाना सन्ति। द्वितीयं स्थानं अस्मात् स्थानात् क्रोशत्रयात्मकं ओखला नामकं ग्रामे एकस्मिन् उन्नते भूभागे कालिकाया: मन्दिरमस्ति ।

(२६) नागपुर :-

मध्यभारतस्य महानगरेऽस्मिन् लक्ष्मण्या तथा रुक्मिणीदेव्या: द्वौ प्रसिद्धमन्दिरौ स्त:। यत्र दर्शनार्थं सम्पूर्णभारतवर्षस्य विशेषत: मध्यप्रदेशीया: जना: अधिकाधिकसंख्यया समागच्छन्ति ।

(२७) नैनादेव्या: मन्दिरम् :

नैनिताल संयुक्तप्रान्तीय पर्वतीय नगरेषु अतीव मनोरमं स्थानं विद्यते। अत्र पर्वतोपरि अतीव अगाधमेकं त्रिकोणसरोवरं विद्यते । किन्तु कतिपयपर्वतेषु अत्रे त्रिपुरुषस्य: तथा पुलहस्य आसन् । अस्यैव सरोवरस्य मल्लीताल इति

स्यात तलस्योपरि प्राक्तनम् नैनादेव्याः मन्दिरमस्ति। १८८०ख्रीस्ताब्दे पर्वतपतनात् प्राचीनमन्दिरं विध्वस्तं। वर्तमानं मन्दिरं पञ्चाशत् वर्ष प्राक्तनं अस्ति। कूर्माचलप्रदेशे भगवती नैनादेव्या अतीवमहत्त्वमेनामेव लक्ष्मीकृत्य नगरस्य नैनीताल इति व्यपदेशं जातम्।

(२८) <u>पठानकोट</u> :

अयम् पठानशब्दः यवनजात्या सम्बन्धितो नास्ति। अपितु अस्य शुद्धं स्वरूपं पथ इति। यतोहि अस्मिन्नगरे प्राचीन कालतः बुद्धोधरावशेषाः सम्प्र-लन्ति। अत्र प्राक्तन, हिन्दू नृपाणां कालीनं दुर्गं ध्वन्सावस्थया विद्यमानं अस्ति। अस्मिन्नेव दुर्गे अतीव प्राचीन देव्यास्थानं अस्ति त्रिगर्त पर्वतीय-प्रदेशस्य द्वारोपरि स्थितं पठानकोटस्य अ देव्या आराधनं अनन्तकालतः समागच्छति।

(२९) <u>पण्ढरपुर</u> :

महाराष्ट्रप्रदेशस्य पण्ढरपुरं अतीव महत्त्वशाली क्षेत्रं विद्यते। अत्रैव श्रीविठोबा मन्दिरस्य प्रान्तप्रदेशे श्रीकृष्णप्रिया, रुक्मिण्या, सत्यभामा, महालक्ष्मी तथा राधिका पृथक् पृथक् स्वमन्दिरेषु शोभायमाना सन्ति। आसाम महत्त्वं महाराष्ट्रप्रदेशे अत्यन्त आदरेण वर्तते।

(३०) प्रयागस्य चण्डिका :

प्रयाग जनपदस्य कड़ा नामके स्थाने एकः सावर्णपूर्वं चतुःशतिपूर्वं बाबामलूकदासेति प्रथितं सन्तमभूत् । मलूकदासः चण्डिकादेव्याः अनन्य उपासक आसीत् तत्रैव चण्डिका देव्याः सिद्धं शक्तिपीठं विद्यते यत्र सन्निनातीयाः जनाः स्व स्व बालकानां चूड़ाकरणसंस्कारार्थम् तथा दर्शनार्थं च समागच्छन्ति ।

(३१) पूर्णनगरस्य पार्वतीपीठम् :

अत्रत्यं सुप्रसिद्ध पार्वती मन्दिरं समस्तेषु महाराष्ट्रप्रदेशेषु मान्यः अस्य पर्वतोपरिस्थितिः तथा शोभना शिल्पकलादर्शकानां हृदयं नेत्रञ्च आकर्षयति। अस्मिन्नेव जनपदे प्रतापगढ़ नामकस्थाने छत्रपति महाराजशिवराजः इष्टदेवी भगवती भवान्याः प्राचीनं मन्दिरं अस्ति ।

(३२) पूर्णगिरि :-

अल्मोड़ा जनपदान्तर्गतं पीतीभीतिखण्डे तनकपुरनामकं स्थानं विद्यते । तत्पार्श्वे एव शारदानद्याः तटे नेपालराजस्य समीप एव कालिकादेव्याः सिद्धपीठं विद्यते । तत्रत्यः अतिशीत अतीव शोभनः मार्गः वनं तथा अन्य वृक्षाणां समष्टि अतीव शोभना विद्यते । पर्वतोपरि कालिकामन्दिरादति-रिक्तं अनेकानि अन्यानि मन्दिराणि अपि सन्ति ।अतीवोन्नतशिखरे भगवती

कालिकाया: मुख्यस्थानं अस्ति । प्राक्तनं पीठं सर्वदा आच्छादितं विद्यते । पवित्रे स्थाने यात्रिणां प्रार्थना तत्रत्य पुरोहिता तत्स्थानं अपि दर्शयन्ति ।

(३३) फर्रुखाबाद :

अस्मिन्नेव जनपदे खिवा नामक स्थाने महात्रिपुरसुन्दर्याः विस्तृते श्रीयन्त्रस्योपरि निर्मिता प्रतिमा विद्यते । जनसामान्य: एनं अन्नपूर्णा मन्दिरं इति उद्घोषयन्ति ।

(३४) महेश्वरी देव्या पीठम् :

बांदा जनपदस्य महेश्वरीदेव्या मन्दिरं अतीव प्राक्तनं मन्दिरं अस्ति। सिद्धोऽस्मिन् स्थाने अनेकदेवो उपासका उपासनां कृता अस्यैव पार्श्वे वामदेवेश्वर पर्वतोपरि अपूर्वं वामदेव शिवलिंगं अस्ति। तदाधारी कृत्यैव अस्य जनपदस्य बांदा इत्यभिधानं जातम् ।

(३५) भुवनेश्वर :-

अस्य स्थानस्य प्राक्तन अभिधानं एकाम्रकाननं काननमस्ति । इदं क्षेत्रं अपि एक पञ्चाशत्शक्तिपीठेषु परिगणितेषु अस्ति । अत्र देवी पादराशारोवरस्य तटोपरि पार्थक्येन अष्टोत्तरशत मन्दिराणि सन्ति ।

(३६) मथुरा :-

अस्य स्थानस्य प्रधानशक्तिपीठत्वेन महाविद्या तथा बरसाने स्थित मन्दिराणि सन्ति । महाविद्याया स्थानं मथुरायामेवास्ति। एकस्मिन् उन्नते भूस्थानोपरि महाविद्यायाः प्राचीनं मन्दिरं विद्यते भगवत्याः प्रतिमा अतीव विस्तृता अस्ति। बरसाने स्थित एकस्मिन् दुर्गेसदृश मन्दिरं श्रीराधिकायाः प्राचीनं सिद्धपीठस्थले विद्यते ।

(३७) मीनाक्षी (मदुरा)

अत्र ( मदुरायां) एकादशशतनिर्मितम मीनाक्षीदेव्याः अतीव प्रतिष्ठितम् सिद्धपीठं अस्ति । दक्षिणभारते यादृशी प्रतिष्ठा प्रसिद्धिश्च अस्य मन्दिरस्यास्ति तादृशी नान्यस्य शक्तिपीठस्य अस्य मंदिरस्य द्वारोपरि अष्टशक्तिनाम प्रतिमा विन्यस्ता अस्ति प्रतिस्तम्भो प्रति एकाः प्रतिमा तथा एतेषामस्तम्भानां उपरि मन्दिरभारमवलम्बितमस्ति ।भारतीयः शक्तिसमुपासकः मीनाक्षीदेवीं अत्यादरेण प्रत्यहं स्मरन्ति प्रणमन्ति च ।

(३८) मद्रासस्य कुडिका मन्दिरम् :

अस्य नगरस्य साहुकारपेठस्थे : सुप्रसिद्धं मातुः कुडिकायाः मंदिरं विद्यते । मन्दिरस्य समदर्शं नार्यं मिष्ठोदनं निर्माय कुडिकादेव्यै समर्पयन्ति।

महाप्रान्तवासिनां शक्तिसमुपासकानामास्था श्रद्धा च सीमारहिता विद्यते । अत्रत्या पूजाति परम्पराऽपि अतीव विचित्रा विद्यते । दर्शनार्थी देव्याः सम्मुखमागत्य स्वशिरसि मुष्टिप्रहारं करोति, तथा स्वकर्णं गृहीत्वानृत्यं करोति ।

(३९) महोबा :-

प्रसिद्धवीर आल्हा-ऊदलस्य आराध्या देवी महोबास्था प्राक्तन् शक्तिपीठेषु परिगण्यते । अस्या आराधना भक्तानां मनोरथसिद्धये तथा पुरुषार्थचतुष्टय सम्पादिका विद्यते ।

(४०) मुम्बादेवी :-

कालकादेवी महालक्ष्म्याः शक्तिपीठम् मुम्बई इति प्रख्यातनगरे - प्राधान्येन मुम्बादेवी-कालकादेवी महालक्ष्मी ति स्थानानि सिद्धपीठत्रयाणि सन्ति । मुम्बादेव्याः पूजायां जीवबलि नोपयुज्यते । कालकादेव्याः प्रतिमा अतीव प्राचीना विद्यते । महालक्ष्म्या मन्दिरं समुद्रतटस्य अतिशोभमाने स्थले निर्मितमस्ति। मुम्बादेव्याः पार्श्वे सुविस्तृतं सुपरिष्कृतम् सरोवरमस्ति। एतद-तिरिक्तं बाबुलनाथस्योन्नते पर्वते देव्या प्रतिमा वर्तते तस्य सौन्दर्यं गाम्भीर्य-ञ्च लोकोत्तरं वर्तते ।

(४१) मैसूरराज्यस्य चामुण्डापीठम् :-

मैसूरराज्यस्याधिष्ठात्री देवी चामुण्डा विद्यते। यस्याः सुविशालं मन्दिरं मैसूरस्य समीपस्थितस्य पर्वतस्योपरि विद्यते । मार्गमध्ये सुदृढसोपानस्य आरोहणार्थं व्यवस्था वर्तते । मन्दिरस्य समीप एव विशालकाय नन्दी-शिववाहनस्य प्रतिमा वर्तते । भगवती चामुण्डामत्रत्या जनाः मैसम्मा इत्यभिधानेन अभिधास्यन्ति। मैसूरराज्यस्य विख्यातं । गण्डभेरुण्डा इति प्रतीकं चामुण्डायाः एवपोतक विद्यते ।

(४२) मैहरस्य शारदाशक्तिपीठम् :-

मध्यप्रदेशस्य अतीव उन्नते पर्वतशिखरोपरि शारदादेव्याः मन्दिरमस्ति। कामरूप-विन्ध्यक्षेत्रवत्- अस्य सिद्धपीठस्यापि महत्त्वं विद्यते ।

(४३) विन्ध्याचलस्य विन्ध्यवासिनी पीठम् :-

विन्ध्यवासिन्याः महत्त्वं वैशिष्ट्यञ्च सर्वेषु शक्तिपीठेषु अनादिकालतो वर्तते । या देवी श्रीकृष्णचन्द्रस्य स्थाने वसुदेवद्वारा कारागारे आनीताऽऽसीत्, सैव कंस करात् भ्रष्टा आकाशवाण्या सूचिता सा एव विन्ध्यवासिनी भगवती जाता । इदं तीर्थं महाप्रधानशक्तिपीठेष्वन्यतममस्ति। इयमेव शुम्भ-निशुम्भयोर्हन्त्री ।

क्षेत्रेऽस्मिन् शक्ति त्रिकोणमस्ति । प्रथमं - विन्ध्यवासिनी (लक्ष्मी) द्वितीयम् - कालीखोहस्य काली (महाकाली) तथा पर्वतस्याष्टभुजा (महासरस्वती) शोभमानाः सन्ति ।

(४४) शिमला :-

अयं प्रदेशोऽपि प्रसिद्धःशक्तिपीठ अस्ति । अत्र वायसरायनिवासस्य समीप एव कोटीति प्रसिद्धा देव्याः मन्दिरमस्ति। रेलवे स्टेशनस्य पार्श्वे एव तारादेव्याः प्राक्तनं मन्दिरं विद्यते । तथैव कण्डाघट्टस्य एकं प्राक्तनं देव्या आयतनं विद्यते ।

(४५) श्रीशैलस्य भ्रमराम्बा पीठम् :-

मल्लिकार्जुनाख्यज्योतिर्लिङ्गस्य स्थितिम् सत्वात् अस्य स्थानस्य महिमा लोकोत्तरा विद्यते । अत्र भ्रमराम्बा देव्याः सुविख्यातं शक्तिपीठ विद्यते ।यस्याधारेण अस्य पर्वतस्य भ्रमगिरि इत्यभिधानं जातम् ।अत्रत्यं प्राकृतिकं सौष्ठवम् लोकोत्तरं वर्णनातीतं विद्यते । एक पञ्चाशत संख्याकासु शक्तिपीठेषु अस्यापि परिगणना विद्यते ।

(४६) सांभर :

इदं स्थानं लवणोत्पादकत्वात् भारतवर्षे विख्यातमस्ति ।लवण-निर्माणस्थलात् समीप एक देव्याः अतीव प्राचीनमायतनं विद्यते ।तत्रत्या

अत: एतां मातरं इत्यभिधानेन निर्दिशन्ति राजपूतप्रदेशे अस्य क्षेत्रस्य अतीव महिमा विद्यते ।

(४७) <u>हरिद्वार</u> :-

अस्मिन्नपि पुण्यक्षेत्रे त्रिकोणात्मकं शक्तिपीठं विद्यते । एकस्मिन् प्रकोणे नीलपर्वतस्था भगवती चण्डी देव्याः मन्दिरम् । द्वितीये च प्रकोणे दक्षेश्वरस्थानस्था परम्बा पार्वती, तृतीये प्रकोणे बिल्व पर्वतनिवासिनी मनसादेवीति । अत्रत्यं प्राकृतिकं सौन्दर्यं सर्वथा वर्णनातीतं विद्यते ।

तत्र चूडामणिग्रन्थे एकपञ्चाशत् सिद्धपीठानां चर्चा चर्चिता अस्ति - तन्निम्नतालिकया प्रदर्श्यते ।

| | स्थान | अंगतथा अंगभूषण | शक्ति |
|---|---|---|---|
| १- | हिंगुला | ब्रह्मरन्ध्र | कोट्टवीशा |
| २- | शर्कर | तीन चक्षु | महिषमर्दिनी |
| ३- | सुगन्धा | नासिका | सुनन्दा |
| ४- | काश्मीर | कण्ठदेश | महामाया |
| ५- | ज्वालामुखी | महाजिह्वा | सिद्धिदा |
| ६- | जलन्धर | स्तन | त्रिपुरमालिनी |
| ७- | वैद्यनाथ | हृदय | जयदुर्गा |

| | | | |
|---|---|---|---|
| ८- | नेपाल | जानु | महामाया |
| ९- | मानस | दक्षिणहस्त | दाक्षायणी |
| १०- | उत्कलमेंविराजाक्षेत्र | नाभिदेश | विमला |
| ११- | गण्डकी | गण्डस्थल | गाण्डकी |
| १२- | बहुला | वामबाहु | बहुलादेवी |
| १३- | उज्जयनी | कर्पूर | मंगलचण्डिका |
| १४- | त्रिपुरा | दक्षिणबाहु | भवानी |
| १५- | चटल | दक्षिणबाहु | त्रिपुरसुन्दरी |
| १६- | त्रिस्रोता | वामपाद | भ्रामरी |
| १७- | कामगिरी | योनिदेश | कामाख्या |
| १८- | प्रयाग | हस्तांगुलि | ललिता |
| १९- | जयन्ती | वामजंघा | जयन्ती |
| २०- | युगाद्या | दक्षिणांगुष्ठ | भूतधात्री |
| २१- | कालीपीठ | दक्षिणपादांगुलि | कालिका |
| २२- | किरीट | किरीट | विमला |
| २३- | वाराणसी | कर्णकुण्डल | विशालाक्षीमणिकर्णिका |

| | | | |
|---|---|---|---|
| २४- | कन्याश्रम | पृष्ठ | सर्वाणि |
| २५- | कुरुक्षेत्र | गुल्फ | सावित्री |
| २६- | मणिबन्ध | दो मणिबन्ध | गायत्री |
| २७- | श्रीशैल | ग्रीवा | महालक्ष्मी |
| २८- | कांची | अस्थि | देवगर्भा |
| २९- | कालमाधव | नितम्ब | काली |
| ३०- | शोणदेश | नितम्बक | नर्मदा |
| ३१- | रामगिरी | अन्यस्तन | शिवानी |
| ३२- | वृन्दावन | केशपाश | उमा |
| ३३- | शुचि | ऊर्ध्वदन्त | नारायणी |
| ३४- | पंचसागर | अधोदन्त | वाराही |
| ३५- | करतोयातट | तल्प | अर्पणा |
| ३६- | श्रीपर्वत | दक्षिणगुल्फ | श्रीसुन्दरी |
| ३७- | विभाष | वामगुल्फ | कपालिनी |
| ३८- | प्रभास | उदर | चन्द्रभागा |
| ३९- | भैरवपर्वत | ऊर्ध्वोष्ठ | अवन्ती |
| ४०- | जनस्थल | दोनों चिबुक | भ्रामरी |

| | | | |
|---|---|---|---|
| ४१- | श्रीशैल | वामगण्ड | शालिनी |
| ४२- | गोदावरीतटे | गण्ड | विश्वेशी |
| ४३- | रत्नावली | दक्षिणस्कन्द | कुमारी |
| ४४- | मिथिला | वामस्कन्द | उमा |
| ४५- | नलहाटी | नला | कालिकादेवी |
| ४६- | कर्णाट | कर्ण | जयदुर्गा |
| ४७- | वक्रेश्वर | मनः | महिषमर्दिनी |
| ४८- | यशोर | पाणिपद्म | यशोरेश्वरी |
| ४९- | अट्टहास | ओष्ठ | फुल्लरा |
| ५०- | नन्दिपुर | कण्ठहार | नन्दिनी |
| ५१- | लंका | नूपुर | इन्द्राक्षी |
| ५२- | विराट | पादांगुलि | अम्बिका |
| ५३- | मगध | दक्षिणजंघा | सर्वानन्दकरी |

देवीभागवते अष्टोत्तरशतपीठानां परिगणना विद्यते - देवीभागवते महर्षिवेदव्यासः क्रमेणैव प्रसङ्गानुगतं पीठस्थानं तथा तत्रत्या अधिदेवतायाः अभिधानञ्च निर्दिष्टं तत् निम्नप्रकारेण वर्तते :-

| | स्थान | देवता |
|---|---|---|
| (१) | वाराणसी | विशालाक्षी |
| (२) | नैमिषारण्य | लिङ्गधारिणी |
| (३) | प्रयाग | ललिता |
| (४) | गन्धमादन | कामुकी |
| (५) | दक्षिणमानस | कुमुदा |
| (६) | उत्तरमानस | विश्वकामा |
| (७) | गोमन्त | गोमती |
| (८) | मन्दर | कामचारिणी |
| (९) | चैत्ररथ | मदोत्कटा |
| (१०) | हस्तिनापुर | जयन्ती |
| (११) | कान्यकुब्ज | गौरी |
| (१२) | मलय | रम्भा |
| (१३) | एकाम्र | कीर्तिमती |

| | | |
|---|---|---|
| (१४) | विश्व | विश्वेश्वरी |
| (१५) | पुष्कर | पुरुहूता |
| (१६) | केदार | सन्मार्गदायिनी |
| (१७) | हिमवत्पृष्ठ | मन्दा |
| (१८) | गोकर्ण | भद्रकर्णिका |
| (१९) | स्थानेश्वर | भवानी |
| (२०) | बिल्वक | बिल्वपत्रिका |
| (२१) | श्रीशैल | माधवी |
| (२२) | भद्रेश्वर | भद्रा |
| (२३) | वराहशैल | जया |
| (२४) | कमलालय | कमला |
| (२५) | रुद्रकोटि | रुद्राणी |
| (२६) | कालञ्जर | काली |
| (२७) | शालग्राम | महादेवी |
| (२८) | शिवलिङ्ग | कपिला |
| (२९) | महालिङ्ग | जलप्रिया |
| (३०) | माकोट | मुकुटेश्वरी |

| | | |
|---|---|---|
| (३१) | मायापुरी | कुमारी |
| (३२) | सन्तान | ललिताम्बिका |
| (३३) | गया | मङ्गला |
| (३४) | पुरुषोत्तम | विमला |
| (३५) | सहस्राक्ष | उत्पलाक्षी |
| (३६) | हिरण्याक्ष | महोत्पला |
| (३७) | विपाशा | अमोघाक्षी |
| (३८) | पुण्ड्रवर्धन | पाटला |
| (३९) | सुपार्श्व | नारायणी |
| (४०) | त्रिकूट | रुद्रसुन्दरी |
| (४१) | विपुल | विपुला |
| (४२) | मलयाचल | कल्याणी |
| (४३) | सह्याद्रि | एकवीरा |
| (४४) | हरिश्चन्द्र | चन्द्रिका |
| (४५) | रामतीर्थ | रमणी |
| (४६) | यमुना | मृगावती |
| (४७) | कोटितीर्थ | कोटवी |

| | | | |
|---|---|---|---|
| (४८) | मधुवन | | सुन्दा |
| (४९) | गोदावरी | | त्रिसन्ध्या |
| (५०) | गङ्गाद्वार | | ब रतिप्रिया |
| (५१) | शिवकुण्ड | | शुभानन्दा |
| (५२) | देविकातट | | नन्दिनी |
| (५३) | द्वारावती | | रुक्मिणी |
| (५४) | वृन्दावन | | राधा |
| (५५) | मथुरा | | देवकी |
| (५६) | पाताल | [illegible] | परमेश्वरी |
| (५७) | चित्रकूट | | सीता |
| (५८) | विन्ध्य | | विन्ध्यवासिनी |
| (५९) | करवीर | | महालक्ष्मी |
| (६०) | विनायक | | उमादेवी |
| (६१) | वैद्यनाथ | | आरोग्या |
| (६२) | महाकाल | | माहेश्वरी |
| (६३) | उष्णतीर्थ | | अभया |
| (६४) | विन्ध्यपर्वत | | नितम्बा |

| | | |
|---|---|---|
| (६५) | माण्डव्य | माण्डवी |
| (६६) | माहेश्वरीपुर | स्वाहा |
| (६७) | छगलण्ड | प्रचण्ड प्रचण्डा |
| (६८) | अमरकंटक | चण्डिका |
| (६९) | सोमेश्वर | वरारोहा |
| (७०) | प्रभास | पुष्करावती |
| (७१) | सरस्वती | देवमाता |
| (७२) | तट | [illegible] पारावारा |
| (७३) | महालय | महाभागा |
| (७४) | पयोष्णी | पिङ्गलेश्वरी |
| (७५) | कृतशौच | सिंहिका |
| (७६) | कार्तिक | अतिशाङ्करी |
| (७७) | उत्पलावर्तक | लोला(लोला) |
| (७८) | शोणसंगम | सुभद्रा |
| (७९) | सिद्धवन | लक्ष्मी |
| (८०) | भारताश्रम | अनंगा |
| (८१) | जालन्धर | विश्वमुखी |

| | | |
|---|---|---|
| (८२) | किष्किन्धापर्वत | तारा |
| (८३) | देवदारुवन | पुष्टि |
| (८४) | काश्मीरमण्डल | मेधा |
| (८५) | हिमाद्री | तुष्टि |
| (८६) | विश्वेश्वर | भीमादेवी |
| (८७) | शंखोद्धारा | धरा |
| (८८) | पिण्डारक | धृति |
| (८९) | चन्द्रभागा | कला |
| (९०) | अच्छोद | शिवधारिणी |
| (९१) | वेणा | अमृता |
| (९२) | बदरी | उर्वशी |
| (९३) | उत्तरकुरु | औषधी |
| (९४) | कुशद्वीप | कुशोदका |
| (९५) | हेमकूट | मन्मथा |
| (९६) | कुमुद | सत्यवादिनी |
| (९७) | अश्वत्थ | वंदनीया |
| (९८) | कुबेरालय | निधि |

| | | |
|---|---|---|
| (९९) | वेदवदन | गायत्री |
| (१००) | शिवसन्निधि | पार्वती |
| (१०१) | देवलोक | इन्द्राणी |
| (१०२) | ब्रह्मामुख | सरस्वती |
| (१०३) | सूर्यबिम्ब | प्रभा |
| (१०४) | मातृमध्य | वैष्णवी |
| (१०५) | सतीमध्य | अरुन्धती |
| (१०६) | स्त्रीमध्य | तिलोत्तमा |
| (१०७) | चित्तमध्य | ब्रह्मकला |
| (१०८) | सर्वप्राणीकों | शक्ति |

शक्ति अङ्क गीताप्रेसगोरखपुरतः साभारं गृहीतः ।

---:o:---

अस्या भगवत्या आश्रयावलम्बनं विना जीवः कदापि ज्ञानमाप्तुं न शक्नोति । भुवनेश्वर्यावलम्बनं विना जीवस्य नास्ति कश्चिदन्योपायः। सन्दर्भे चास्मिन्नपि भगवत्या भुवनेश्वर्या उत भुवनेश्या अभिधानमेवाभिहितं विद्यते --

ध्यायेज्जपाराधयेच्च ।

देवीभागवतस्य सप्तमस्कन्धे अष्टत्रिंशेऽध्याये भगवत्या पञ्चाशत्पीठानामुल्लेखो वर्तते । एतेषु च भगवत्याः विशिष्टरूपाणां कृते स्थानविशेषस्याप्युल्लेखो विद्यते ।एते पीठाः भारतवर्षस्य सम्पूर्णभागे संस्थापिता सन्ति। एतेषु केषाञ्चिदेव स्थानानां निर्देश उपलब्धोऽस्ति यस्य भौगोलिकी स्थितेः यथार्थरूपेण परिचयः प्राप्तोऽस्ति। भुवनेश्वर्याः स्थानं मणिद्वीपमिति निर्दिष्टमस्ति, परन्तु अस्य भौगोलिकीस्थितेः निर्णयं वा कर्तुं न शक्यते --

श्रीमद्भुवने - - - - - -  प्रधान ।

अन्ते चात्र निर्णीतं यत् काशी एव सर्वदेवीक्षेत्रेषु मुख्यमङ्गीकृतमस्ति यतो हि अस्मिन्नेव तीर्थे सर्वक्षेत्रस्था भगवत्या निवासं वर्तते । यद्यपि अविमुक्ते विशालाक्षी इति वचनात् अविमुक्तक्षेत्रे (वाराणस्याम्) विशालाक्षीदेव्याः मुख्यत्वेन स्वीकृतिरस्ति तथापि आग्रहहीनो भूत्वा अत्रैव

सर्वदेवगणां निवासमङ्गीकृत्य कास्यामेव देवीभक्तस्य निवासार्थं तथा देव्याः अर्चनस्य च निर्देशस्य च सङ्केतो समुपलभ्यते --

अथवा-

देवीभागवतस्य सप्तमस्कन्धस्यान्तिमेषु नव अध्यायेषु (३२-४० अ० यावत्) अध्यात्मतत्त्वानां विशिष्टं विवरणं प्रदत्तमस्ति। अतो हि अयमंशः 'भगवती गीता इति नाम्ना व्यपदिश्यते। भगवद्गीतायाः भगवतीगीतायाः साम्य वैषम्य समीक्षायां विपश्चितां मनन-निदिध्यासनार्थं गवेषणीयं विषयमस्ति। अन्ते च अस्य पुराणस्य सारभूतमद्वैतपरकमुपदेशवचनं निम्नाङ्कितेषु पद्येषु संगृहीतं विद्यते।

निष्कर्षः -- पुराणानां तन्त्रसाहित्यस्य समालोचनेन भुवनेश्वर्याः यत् स्वरूपं निर्धारितं भवति - तस्य निर्देशोपरि उल्लिखितं विद्यते। तेषां मध्ये स्वरूप द्वयस्योपलब्धिर्भवति। एकं तु तस्या विश्वमातृरूपा - प्रकारेण चावेनसा विश्वजननी-ब्रह्म-विष्णु-महेश्वरस्योत्पादिका अङ्गीकृता वर्तते। अपरे तु सा दशमहाविद्यानामन्तर्भूता तथा वागीश्वरीदेवी तुल्या एव वागेश्वरी तथा वाण्याः समुत्पादिका वेदमाता अङ्गीकृता।

## भुवनेश्वरीस्वरूप-चिन्तनम्

हृत्पुण्डरीकमध्यस्थां प्रातः सूर्यसमप्रभाम् ।

पाशांकुशधरां सौम्यां वरदाभयहस्तकाम् ।

त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे[१] ॥

भगवतीभुवनेश्वर्याः स्वरूपमवलम्ब्य अत्र किंचन चिन्तनं प्रस्तूयते तन्त्रशास्त्रे दशमहाविद्यानां चर्चा प्रसिद्धिर्वर्तते । याः शक्तयः संसारस्य सृष्टिपुष्ट्यादीनि कर्माणि सम्पादयन्ति, तासु काली आद्या शक्तिवरिष्ठा अस्याः च उद्भूता अपरा नवशक्तयः भवन्ति। दशविद्यानां नामगणनाप्रसङ्गे पद्यमिदं कीर्तयन्ति :-

कालीतारामहाविद्या षोडशी भुवनेश्वरी ,

पञ्चमी छिन्नमस्ता च महाविद्याः प्रकीर्तिता ।

त्रिपुराभैरवी धूमावती च बगलाम्बिका ,

मातङ्गी कमला चैव सिद्धविद्याः प्रकीर्तिताः ॥

- - - - - - - - - - - - -

१- देव्युपनिषद् ।

काली-तारा-षोडशी-भुवनेश्वरी-छिन्नमस्ता-त्रिपुराभैरवी-
धूमावती-बगलामुखी-मातङ्गी तथा कमला एता नामानि दशमहाविद्यानां
भवन्ति । अत्र आसां साहित्यस्य स्वरूपस्य च चिन्तनविषये तन्त्रशास्त्र-
जिज्ञासूनां कृते किञ्चित् तथ्यं प्रस्तूयते ।

(१) तन्त्रग्रन्थाः

भुवनेश्वरीविषयकाः तन्त्रग्रन्थाः संख्यायां न्यूना एव, किन्तु ये तन्त्रग्रन्थाः अद्य उपलभ्यन्ते ततः भुवनेश्वर्याः पूजार्चनतन्त्र-मन्त्रादिविषये सविस्तरं वर्णितं ।

१- भुवनेश्वरी रहस्यम् :

भुवनेश्वर्युपासनायाः सर्वप्रथमः ग्रन्थः अस्ति । षड्विंशतिः पटले विभक्ते ग्रन्थेऽस्मिन् देव्याः अर्चना-पद्धतिः साङ्गोपाङ्गं वर्णिताऽस्ति । अस्यनिर्माता पृथ्वीधराचार्यः अस्ति । यः आदिशङ्कराचार्यस्य शिष्य इति मान्योऽस्ति। पृथ्वीधरस्य शिष्यक्रमः यथा, ब्रह्मचैतन्यः,शिवचैतन्यः, आनन्दचैतन्यः, देवचैतन्यः, जनार्दनचैतन्यश्च । अस्य ग्रन्थस्य एकाप्रति एशियाटिकसोसाइटी बंगालस्य पुस्तकालये विद्यमानाऽस्ति। शिष्यक्रमस्य निर्देशः श्यामार्चनविधिनामकग्रन्थे निर्दिष्टमस्ति।

भुवनेश्वरीविषये तन्त्रग्रन्था:

(१) भुवनेश्वरीतन्त्र: (२) भुवनेश्वरी पारिजात: अयमपि प्रामाणिको ग्रन्थ: । (३) भुवनेश्वरी महास्तोत्रम् : सकलागमाचार्य: चक्रवर्ती पृथ्वीधराचार्य: अस्य स्तोत्रस्य प्रणेताऽस्ति । स्तोत्रे षट्-चत्वारिंशत (४६) पद्यानि सन्ति । येषु आदे: ३६ पद्यानि भगवत्या: विशदां स्तुतिं विदधति । अन्तिमानि दशपद्यानि च गुरो: तथा ग्रन्थस्य विषये प्रतिपादयन्ति स्तोत्रस्यास्य सप्तत्रिंशत्तमं पद्यं गुरो: नामनिर्दिशति ।

श्रीसिद्धनाथ इति कोऽपि युगे चतुर्थे
प्रादुर्बभूव करुणावरुणालयेऽस्मिन्
श्रीशम्भुरित्यभिधया स मयि प्रसन्नं
चेतश्चकार सकलागम-चक्रवर्ती ।।

अस्य गुरोर्नाम श्रीशम्भु: शम्भुनाथो वा आसीत । स्तोत्रस्यास्य टीकाकार: पद्मनाभकवि: उपर्युक्तस्य पद्यस्य टीकायाम् 'वरुणालय: ' शब्दस्यार्थ: नर्मदातटनिकटवर्तिग्रामविशेष इति कृत: ।अत: स्पष्टीभवति यत् शम्भुनाथ: नर्मदातटनिकटवर्तिग्रामस्य निवासी आसीत् । पुन: आउफ्रेक्ट-महोदय: 'स्व कैटेलाग कैटेलागस्य' नामक पुस्तकसूचीपत्रे पृथ्वीधरस्य सप्तकृतीनां

विषये निर्देशं करोति । यथा सप्तकृतयः कैटेलाग कैटेलागस्य सूचीपत्रानुसारम्-
(१) भुवनेश्वरी स्तोत्रम् (२) लघुसप्तशतीस्तोत्रम् (३) सरस्वतीस्तोत्रम् (४) कातन्त्रविस्तरविवरणम् (५) मृच्छकटिकव्याख्या (६) वैशेषिकरत्नकोषः। (७) भुवनेश्वर्यर्चनपद्धति चेति । लघुसप्तशतीनामके स्तोत्रे अष्टादशपद्यानि सन्ति, यत्र दुर्गासप्तशत्याः वर्णविषयाणां संक्षेपेण वर्णनाऽस्ति ।अस्य सप्तदशतमे पद्ये ग्रन्थकर्ता स्फुरोः नाम शम्भुनाथ इति निर्दिष्टः यथा --

श्रीसिद्धनाथापरनामधेयः श्रीशम्भुनाथो भुवनैकनाथः
तस्य प्रसादात् सकलागमार्थ पृथ्वीधरः स्तोत्रमिदं चकार ।

भुवनेश्वरी-अर्चनपद्धतेः अपि संकेतः प्राप्यते । यम् अवलम्ब्य भुवनेश्वरीचन्द्रिकायाः निर्माणम् अभवत् । अत्र ध्यातव्यमस्ति यत् उपरि द्वयोः स्तोत्रयोः पृथ्वीधर स्फुरोः नाम सिद्धनाथ अपरं नाम शम्भुनाथश्चेति निर्दिशति । अतः अयं आदिशङ्कराचार्यस्य शिष्यात् भिन्न इति प्रतीयते । किन्तु अयं निश्चीयते: पृथ्वीधराचार्यः भुवनेश्वर्याः उपासकस्तथा तद्-विषयकग्रन्थानां निर्माताऽऽसीत् ।

भुवनेश्वरी पञ्चाङ्गम्:

अस्मिन् पञ्चाङ्गे पञ्चग्रन्थाः सम्मिलिताः भवन्ति ।

(क) पटल: (श्लोकसंख्या १११): अ यं रुद्रयामलस्य दक्षिणाम्नायरहस्या-
न्तर्वर्ती इति मन्यते ।

(ख) भुवनेश्वरीपूजापद्धति:

(ग) कवच (३२ अनुष्टुप्) त्रैलोक्यमङ्गलकवचनामक भुवनेश्वरीकवच ।

(घ) भुवनेश्वरी सहस्रनाम (१२१पद्य) रुद्रयामलतन्त्रे यानि सहस्रनाम
निर्दिष्टं भवति। अत्र पद्यद्वयं दृश्यताम् विद्वद्भिः --

'हसन्ती शिवसंगेन रांधितानन्ददायिनी ,

नागाङ्गी नागभूषा च नागहारावधारिणी (४२)

शुकस्या शुकिणी शुका शुकपूजकपूजिता ,

कामाख्या कामरूपा च योगिनी पीठवासिनी ।।(६२)

(ङ) भुवनेश्वरी अष्टोत्तरशतनाम-स्तोत्रम् ।

(च) भुवनेश्वर्यष्टकम् - रुद्रयामलतन्त्रे वर्णितमस्ति ।

(छ) भुवनेश्वरी मकारादिसहस्रनामस्तोत्रम् ।

स्तोत्रेऽस्मिन् २०२ पद्यानि सन्ति ।इदं 'महातन्त्रार्णव' नामक-
ग्रन्थात् उद्धृतमस्ति ।

(ज) भुवनेश्वरी हृदयस्तोत्रम् (२१ पद्यानि)

(क)     भुवनेश्वरी स्तोत्रम् - रुद्रयामलतन्त्र: १२६ पद्यानि । ।

अस्य रमणीयास्तुति: भगवती रुपाप्रकाशिकाऽस्ति ।

(ख)     भुवनेश्वरी अर्चनचन्द्रिका :- पृथ्वीधराचार्यस्य पद्धतिं शारदातिलकादीन् नानातन्त्रग्रन्थान् अवलम्ब्य दाक्षिणात्यसम्प्रदायावलम्बी अनन्तदेवोऽस्य निर्माणं कृतवान् । अस्य त्रय: कल्पा: सन्ति । अत्र पूजाया: वैविध्यं कृतवान् । अस्य त्रय: कल्पा: सन्ति अत्र पूजाया: वैविध्यं ,विविधफलप्राप्त्योद्देश्यं च वर्ण्यते । एषु दशसु ग्रन्थेषु आदे: ग्रन्थत्रयम् अप्रकाशितमस्ति , अन्तिमा: सप्तग्रन्था: राजस्थानपुरातनग्रन्थमालायां चतु:पञ्चाशत्ग्रन्थाङ्के: श्रीभुवनेश्वरीस्तोत्र नाम्ना एकत्रप्रकाशितमस्ति ग्रन्थस्य सम्पादनं बहुपरिश्रमं विसृज्य विदुषा सम्पादक पं० गोपालनारायणबहुरा महोदयेन ,जोधपुर १९६५ ख्रीष्टाब्दे कृतमिति स: धन्यवादार्ह:।

श्री भुवनेश्वरी : तान्त्रिकदृष्ट्या - सृष्टे: प्रारम्भसमये यदा भुवनानां निर्माणमभवत् तदा एतेषां रक्षणाय विशेषशक्ते: कल्पनाऽभवत् । यस्या: नाम भुवनेश्वरी अस्ति । एषा शिवेन सह सर्वदा अभिन्नतयास्थिताऽस्ति ।अपि च स्वतन्त्रा, विघ्नरहिताशक्तिरस्ति, समस्तं विश्वं व्याप्य शासिका भुवनेश्वरी एव वर्तते । यथा --

शिवाविनाभूतशक्तिः स्वतन्त्रा निरुपप्लवा ।

समस्तं व्याप्य भुवनमोष्टे तेनेश्वरी मता ।।

भुवनेश्वरी त्रिगुणात्मिका सती यष्टिं धारयति यस्याः गले मौक्तिकमाला भूषणम् अस्ति। अस्याः त्रीणि नेत्राणि सन्ति । इयं बालसूर्येषु शोभां धारयति । इयं चतुर्भुजा भवति, यत्र या अङ्कुशं पाशंवरं तथाऽभयं धारयति ,इयं मयं हन्त्री भक्तानां चित्ते विराजमाना भवतु । परन्तु तावत् पद्येऽस्मिन् दिव्या प्रार्थना विहिताः ।

बुद्धिगतविश्वस्य अधिष्ठाता त्र्यम्बकः शिवोऽस्ति । अस्य शक्तिः भुवनेश्वरी विद्यते । शक्ति-शक्तिमतोः अभेदेन इयमपि त्रिनेत्रा अस्ति । सोमात्मकामृतेन सा विश्वं पोषयति ।अतः भगवती स्वकिरीटे चन्द्रं बिभर्ति । सा स्वनामधन्या सती त्रिभुवनस्य पोषणं विदधाति । तथ्य-स्यास्य संकेतः अस्याः हस्तस्य मुद्रा संकेतयन्ति । या जीवेषु कृपादृष्टिं निदधाति, यस्याः मृदुहासः धर्मं संकेतयति, इयं त्रिभुवनस्य शासनकर्त्री अस्ति । यस्य संकेतः पाशाङ्कुशाभ्यां भक्तेभ्यः प्राप्यते । इदं तु भगवत्याः स्वरूपम् । प्रस्तुतं पद्यं तु भगवत्याः स्वरूपं प्रकटयति --

उद्यद्दिनद्युतिमिन्दुकिरीटं

तुङ्गकुचां नयनत्रययुक्ताम् ।

स्मेरमुखीं वरदां कुशपाशा -

भीतिकरां प्रभजे भुवनेश्वरीम् ।।

भुवनेश्वरी चतुर्भुजा अस्ति । अत्र वरदमुद्रा, अङ्कुशः, पाशः, अभयमुद्रा च विद्यमानाः भवन्ति । यथा पद्यम् --

अथानन्दमयीं साक्षात् शब्दब्रह्मस्वरूपिणीम् ।

ईडे सकलसम्पत्त्यै जगत्कारणमम्बिकाम् ।।

सकलसम्पत्तीनां प्राप्त्यै आनन्दमयीं, जगतः उत्पादयित्रीं तथा शब्दब्रह्मणः प्रत्यक्षरूपाम् अम्बिकां स्तौमि ।

भुवनेश्वरीमहास्तोत्रस्य अध्ययनेन अस्याः सरस्वत्या सेह सह अभिन्नता वर्तते इति परिचयः प्राप्यते । वैखरीमयीवाण्याः रूपमत्र पद्ये निर्दिष्टं भवति (स्तोत्रस्य द्वितीयं पद्यम्)

आदि क्षान्तविलास-लालसतया तासां तुरीया तु या

क्रोडीकृत्य जगत्त्रयं विजयते वेदादिविद्यामयी ।

तां वाचं मयि सम्प्रसाद सुधा-कल्लोल-कोलाहल-

क्रीडाचर्वणि वर्णनीयकविता साम्राज्यसिद्धिप्रदाम् ।।

अत्र भगवती प्रार्थ्यते - त्वमेव तुरीयावाणी वैखरीविद्या च भवसि। अस्मल्लहरीणां कलरव क्रीडामयीकवितया साम्राज्यसिद्धिप्रदायित्री भवतु ।

भगवती अनेकफलप्रदायिनी इति श्लोके स्पष्टं वर्ण्यते । पुनः भगवत्याः मृत्युञ्जयमन्त्रस्य आराधनायाः फलविषये ३३ मन्त्रे प्रतिपाद्यते । स्तोत्रस्य महनीयता इयमस्ति, यत् स्तोत्रमिदं बीजमन्त्रेण युक्तं भवति, अत्रोपासनायाः विधिरपि निर्दिश्यते । भुवनेश्वर्याः अनन्यपरता पृथ्वीधरस्य अभीष्टमस्ति। अर्थात् जगति मातापितासुहृदयादयः ये सम्बन्धिनः सन्ति ते सर्वे भगवत्याः स्वरूपाः भवन्ति , भगवतीमन्त्रेण किमपि वस्तु अलभ्यं नास्ति,पश्यन्तु पद्यमिदम् :-

त्वं मातापितरौ त्वमेव सुहृदस्त्वं भ्रातरस्त्वं सखा ,
त्वं विद्या त्वमुदारकीर्तिचरितं त्वं भाग्यमत्यद्भुतम् ।
किं भूयः सकलं त्वमीहितमिति ज्ञात्वा कृपीकामहे ।
श्रीविश्वेश्वरि ! सम्प्रति शरणं मातः परं नास्ति मे ।।

मन्त्रजपस्य समयविधानमपि निर्दिश्यते । समुचित स्तोत्रं ३४श्लोकाः विधिना मन्त्रजपेन मासत्रयेण एव अलौकिकविद्याप्राप्तिर्भवति । भगवत्याः भुवनेश्वर्याः द्वे सहस्रनामस्तोत्रे समुपलभ्येते । एकं रुद्रयामलतन्त्रे अपरम् अकारादिसहस्रनामस्तोत्रम्,(महातन्त्रार्णवे) तन्त्रे उपलभ्यते ।उदाहरणार्थं कतिपय पद्यानि --

भास्करशब्देन भासूयमानानि चत्वारिंशत्श्लोकेषु यदि प्रत्येक-स्मिन् श्लोके पञ्चनामानि भवेयुः तदा सर्वेषां संख्याः प्रायः द्विशतं भवन्ति। यथा :-

भास्कराधाररूपेशी भास्कराधाररूपिणी
भास्कराधारकाम्येशी भास्कराधारकामिनी ।
भास्कराधार चक्रस्था भास्कराधारधर्मिणी
भास्करेश्वरकान्ती भास्करेश्वरपालिनी ।।

'ललिता सहस्रनाम' इत्यस्य विविधता तथा गूढार्थपरतया अस्मात् भास्करनामाख्य ग्रन्थात् भिन्नं भवति । इदं सहस्रनाम ब्रह्माण्डपुराणान्त-र्गते उत्तरखण्डे हयग्रीवेण लोपामुद्रायाः पत्ये अगस्त्याय उपदिष्टम् ।अस्योपरि सौभाग्यभास्कर नाम्नी भास्कररायस्य प्रख्याता व्याख्या अस्ति । यत्र अर्थस्य गम्भीरता प्रकाशिता भवति । भगवत्याः प्रत्येकनाम्नि तस्य गुणस्य स्वभावस्य व्याख्या च क्रियते।

उदाहरणार्थं नामद्वयस्य व्याख्या प्रस्तूयते :-

भगवत्याः नाम मिनाक्षी अस्ति । अस्य तात्पर्यस्य स्पष्टार्थं किमपि गम्भीरतथ्यं अपेक्षितमस्ति । भगवत्याः नेत्रं मीननेत्रतुल्या अस्ति । अत्र केवलं साधारणोपमा प्रतीयते परन्तु इदं नाम एक नवीनं तथ्यं संकेतयति ।

'मीनानां वीक्षणमात्रेणशिशूनामभिवृद्धिः । न तु स्तन्यपानेनेति प्रसिद्धिः । तेन कटाक्षमात्रेण भक्तपोषिका इत्यर्थः । इयं प्रसिद्धिरस्ति । मत्स्याः स्वदृष्ट्या स्वशिशून् पोषयन्ति । एवमेव भगवती स्वभक्तकाय कृपाकटाक्षपातं करोति । अपरं नाम कुमारी अस्ति । कुमारित्वहत्यां तु शुम्भेन भगवत्याः कुमार्याः समीपे दूतमुखेन स्वविवाहप्रस्तावः प्रेषितः । यस्य प्रत्युत्तरेण देवी स्व कठिनप्रतिज्ञां वदति :-

यो मां जयति संग्रामे यो मे दर्पं व्यपोहति ।
यो मे प्रतिबलो लोके स मे भर्ता भविष्यति ।।

(सप्तशती ५।१२०)

कुमार्याः एवंभूतां प्रतिज्ञां खण्डयितुं कोऽपि न क्षमोऽस्ति । अतः तस्याः कौमार्यं अखण्डितं भवति ,इयं तु कुमारीपदस्य व्याख्या कुमारीपूजायाः विधानं शारदनवरात्रे अनुष्ठीयते ,यत्र कुमार्यः भगवत्या प्रतिनिधिभूताः भवन्ति । `महाकालसंहितायां' अस्य पूजाविशेषस्य विशदवर्णना लभ्यते ।

निर्वाणतन्त्रस्य सप्तमपटले मठकिस्य वर्णना प्रसङ्गे कथ्यते यत् अत्र परमेश्वरभगवत्योः रूपविशेषः निवसति । निर्गुणालयः ईश्वरः सर्व-कर्ता शिवः भुवनेश्वरीमन्त्रेण स्पन्दितुं नैव शक्यते । सः षड्गुणवत् भवति ,

तथा वक्तुं न शक्नोति । भुवनेश्वर्याः आराधनाफलेन हि ईश्वरस्य सर्वस्वामित्वं कीर्त्यते । अतः भुवनेश्वरी विश्वमाता अस्ति । किं च सा विश्वस्य पालयित्री विश्वस्य मोक्षदायिनी च भवति :-

ईश्वरः सर्वकर्ता च निर्गुणस्यालयः शिवः ।
भुवनेशीं विना देवि: स्पन्दितुं नैव शक्यते ।।१८।।
कंप्राय: सदा ईशो गन्तुं च नैव शक्यते ।
भुवनेशी समाराध्य सर्वस्वामी स ईश्वरः ।।१९।।
मोक्षदा सर्वलोकानां मुक्तिदा विश्वमातृका ।
भुवनेशीं विना ईशः कर्तुं किञ्चिन्न शक्यते ।।२१।।

एवं प्रकारेण तन्त्रदृष्ट्या भुवनेश्वरी सर्वाधिकमहत्त्वशालिनीदेवी अस्ति । अतः शिवस्य ईश्वरत्वं कालपालकत्वं च भुवनेश्वर्याः उपासनायाः फलमस्ति ।

भुवनेश्वरी : पौराणिकदृष्ट्या -

देवीभागवतस्य अनेक स्कन्धेषु भुवनेश्वर्याः स्तुतिः ब्रह्मा-विष्णु-महेश्वरद्वारा सम्पादिता विद्यते । पुराणस्यास्य तृतीयस्कन्धस्य तृतीयाऽध्याये देवेरस्या अस्य विश्वस्योत्पादिका, आदिशक्तिस्वरूपेण तस्या वर्णनं सम्पादितं विद्यते । ब्रह्मा-विष्णुसहिता शिवः स्व कानीमन्येषायन्

आकाशे स्वविमाने: पर्यटन्नासन् तदा ते एकां दिव्यरूपधारिणीं सुन्दरीं ददृशु:। सा रत्न-माल्यं तथा अम्बरधारिणी, रक्तगन्धानुलिप्ता सुरक्त-नेत्रा, कोटिविद्युत्प्रभातुल्य प्रकाशशालिनी चारुवदना रमा कोटिभिरधिक-शोभना सूर्यबिम्बतुल्य वरपाशाङ्कुशधारिणी देवी आसीत् सा एव भुवनेश्वरी। अस्यैव नाम भुवनेशी अप्यस्ति।

एनां नवयौवनेन शोभमानां सुन्दरीमवलोक्य विष्णोश्चेतसि-स्फुरणा जाता यदियं देवी अस्माकं त्रिदेवानां समस्तस्य भुवनस्य च कारणभूता अस्ति। इयमेव महाविद्या, महामाया, पूर्णा-प्रकृति:अव्यय इत्याद्यभिधानैरभिहिता भवति। इयमेव मूलप्रकृतिर्विद्यते या सदा पुरुषेण सङ्गतिमेत्य अस्य ब्रह्माण्डस्य निर्माणं विधाय परमात्मने प्रकटयति।

भुवनेश्वर्यास्तवनं श्रीविष्णुना (चतुर्थ०) श्रीशिवेन (पञ्चमाध्याये) ब्रह्मणा स्कन्देण (पञ्चमाध्याये) विहितमस्ति। तत्र विष्णोरुक्ति: -- यदास्मिन् संसारे भगवत्या विना यत् किमपि द्रव्यं स्थिरं न विद्यते। भगवति रेव इदं जगत्सर्वतोभावेन व्याप्य अवस्थिता भवति। अत एव विपश्चित: सर्वदा कथयन्ति यत् व्यवहारे शक्त्या विना पुरुष: नितान्त अशक्तो-ऽसमर्थश्च।

तत्रैव शिवस्योक्तिर्यत् । ये पुरुषाः त्रिदेवनिर्मिता एवं सृष्टि-सम्पादनं स्वीकुर्वन्ति ते अन्यथा भाषिणः । त्रयोदेवाः भगवतिविनिर्मिता तथा भुवनेश्वरी कृपयैव कार्यनिर्माणं कुर्वन्ति । तथा तत्कृपालेशादेव ते कामदाता ,मोक्षदाता(वाग्युक्त) नवाक्षरमन्त्रस्य सत्यं जपपरायणा सन्ति । ननु नवाक्षरम् --

नवाक्षरमन्त्रातिरिक्तं वाग्बीज, कामराजस्तथा ।

मायाबीजं, एते मन्त्राः परमार्थप्रदा इति उद्‌टङ्कित विद्यते ।

स्कन्धेऽस्मिन् शक्तेः शक्तिमत्ता प्रतिपादितविद्यते ।

अस्मिन्नेव सप्तमाऽध्याये तत्त्वानां निरूपणं कृतमस्ति । अस्य स्कन्धस्यान्तिमे षाध्याये )२१ अध्याये) भगवत्याः सर्वदेवनिर्मात्री तथा जगत्प्रोत्पादिका रूपेण अतीव मनोहरं चित्रणं कृतमस्ति । तद्विषयस्य प्रतिपादकानि पद्यानि अधो निर्दिष्टानि सन्ति ।

भगवती भुवनेश्वर्याः स्वरूपविषये स्वकीय स्वल्पचिन्तनं प्रस्तूयते । तन्त्रशास्त्रे १० महाविद्यायाः प्रसिद्धि विद्यते । एताः महनीयशक्तयः सन्ति, या अस्य जगतः रक्षां सृष्टि वा निर्मितं स्वकीयं सामर्थ्यं स्थिरां कुर्वन्ति। तासु आद्याशक्तिर्महाकाली तत्स्वरूपादेवोद्भूता अन्या नवशक्तयःतन्त्रशास्त्रे स्वीकृताः सन्ति। निम्नाङ्कितेषु पद्येषु दशविद्यानां नामनिर्दिष्टमस्ति-

- - - - - - - - - - - - - - - - - - - - - - - - - - -

अथर्ववेदस्य पृथ्वीसूक्ते मातृभूमिं प्रति भारतीयभावनाया अत्यन्तमुदात्तं वर्णनं विद्यते । यथा माता स्वकीयं तनयं वात्सल्येन दुग्धं पाययति तथैवास्माकं मातृभूमिरपि विभिन्नानि ज्ञानपुराणपयस्विभि पयस्वतीभिः भारतीयां जनतामाप्याययति । अत एवेयं विश्वम्भरा धात्री चोच्यते --

माता भूमिः पुत्रो अहं पृथिव्याः[1] ।।

अस्मिन् मन्त्रे मातृभूमेः एकत्वस्य तथा तया सह मानवहृदयस्य ऐक्यताया यादृगुत्कृष्टं रूपं वर्तते तादृग् अन्यत्रास्ति दुर्लभम् । भारतीयसंस्कृतौ सत्यस्य यः प्रकाश उपलभ्यते, तस्योद्गमो मातृभूमिरेवास्ति ।

वायुपुराणेनापि पृथिव्या जनन्येति नाम निर्दिष्टा सा सर्वभूतमयी जननी प्रोक्ताऽस्ति --

जननी सर्वभूतानां सर्वभूतधरा धरा ।
नाना जनपदाकीर्णा नानाधिष्ठानपत्तना ।।

- - - - - - - - - - - - - - - - -

१- अथर्ववेद १२।१।१२

नानानदनदी शैला नैकजाति समाकुला ।

अनन्ता गीयते देवी पृथ्वी बहुविस्तरा ॥

यस्य हृदयं परमे व्योमन् सत्येनावृतममृतं पृथिव्याः ॥[1]

पृथ्वीसूक्ते राष्ट्रं त्रिविधं निर्दिष्टमस्ति - (१)निकृष्टं, (२)मध्यमं, (३) उत्तमम् च । तत्र निकृष्टकोटिके राष्ट्रे भौतिकसम्पदः पूर्णतया विकासो दृश्यते। मध्यमे राष्ट्रे जनताया बुद्धौ सर्वदा चञ्चलता अवतिष्ठते ।

उत्तमस्य राष्ट्रस्य वैशिष्ट्यं तत्रत्या संस्कृतिरेवेति । अतो वेदमन्त्र-द्वारा उत्तमराष्ट्रे मानसिकस्य तेजसः शारीरिकबलप्राप्तेश्च प्रार्थना कृता विद्यते ।

स नो भूमिस्त्विषिं राष्ट्रे दधातूत्तमे ।[2]

पृथ्वी हि राष्ट्रस्य शरीरम्, जनता प्राणः संस्कृतिश्चास्ति मनः। एषां त्रयाणां सम्मेलनेनैव राष्ट्रस्यात्मनो भवति निर्माणम् । अतो यस्मिन् कस्मिन्नपि राष्ट्रे समुत्पद्य तत्रत्यायाः संस्कृतेः समुन्नतिकरणं तत्रत्यायाः प्रत्येकव्यक्तेरेवेति, परमं कर्तव्यम् ।

- - - - - - - - - - - - - - - - - - - -

१- वायुपुराण ५।२३

२- अथर्ववेद १२।१।८

वस्तुत: स्वसंस्कृते: समुन्नतिद्वारैव मानवो राष्ट्रं च तस्य ऋणान्मुक्तो भवितुमर्हति। यथा प्रत्येकव्यक्ति: स्वकीय नैजं वैशिष्ट्यं बिभर्ति तथैव प्रत्येकराष्ट्रस्य नैजी विशेषता भवति, यया तद्राष्ट्रमपरराष्ट्रापेक्षया समुन्नतं प्रतीयते । तत्र भारतस्य वैशिष्ट्यमस्माभिर्वेदपुराणद्वारैवावगन्तुं शक्यते ।

अन्यराष्ट्रापेक्षया भारतस्य वैशिष्ट्यमत्रैवास्ते यदाध्यात्मिके ज्ञाने स्वधर्मपालने,परोपकारकरणे संयमे राष्ट्रस्योद्धारे स्वाध्याये सर्वसमुन्नतौ च यत्सदस्ति ।

यदि वेदा: भारतीयसंस्कृते: सर्वोच्चमुत्तमं स्थानमस्ति तर्हि पुराणानि सन्ति ।

वस्तुत: पुराणं वेदानां इत्थं भारतीयसंस्कृते: शाश्वतानि स्रोतांसि, हिन्दुजातिसंस्कृतिसम्बन्धिन: कदाचिदेव केचन एवंविधा विषया: सम्भवेयु: येषां प्रकाश: पुराणै: न कृत: स्यात् । वेदान्तरं भारतीयसंस्कृतेर्वास्तविकं स्वरूपं अस्माभि: पुराणैरेवावगन्तुं शक्यते ।

पुराणानुसारं पुराणानि हि धार्मिक-सामाजिक-सांस्कृतिक - राजनीतिक आर्थिकादिषु क्षेत्रेषु लोकवर्गस्य विचाराणां कार्याणां च यथार्थं चित्रमुपस्थापयन्ति । पुराणानामनुशीलनेनास्माभि: स्वजीवनोद्देश्य-

पूर्त्यै आदर्शमयः सदुपदेशो लभ्यते। यतो हि पुराणेष्वैकत्रैवाहिकामुष्मिक-हितसिद्धये उदाहरण - प्रत्युदाहरण कथानकोपकथानकद्वारा शुभकर्माणि प्रवृत्त्यै ऽशुभकर्मभ्यश्च निवृत्त्यै सदुपदेशो दत्तोऽस्ति --

रामादिवत् वर्तितव्यं न रावणादिवत् ।

पुराणानुसारमस्माकं देशस्य नामास्ति भारतवर्षम् । तथात्र निवासिन्याः प्रजाया नामास्ति भारती । पुराणेषु भारतवर्षस्य भौगोलिको विस्तारः समुद्रादुत्तरे हिमालयाच्च दक्षिणे प्रोक्तोऽस्ति --

उत्तरं यत् समुद्रस्य हिमवद्दक्षिणं च यत् ।

वर्षं तद् भारतं नाम यत्रेयं भारती प्रजा[1] ।।

तथा कन्याकुमारीतो हिमालये गङ्गाया उद्गमस्थानपर्यन्तं विस्तृतो भूभागो भारते सम्मिलितोऽभिमतोऽस्ति ।

आयतो ह्याकुमारिक्यादागङ्गाप्रभवाच्च वै ।

तिर्यगूर्ध्वविस्तीर्णः सहस्राणि नवैव तु[2] ।।

- - - - - - - - - - - - - - - - - - - - - - - -

१- वायुपुराण ४५।७५

२- वायुपु० ४५। ८१

निरुक्तशास्त्रदृष्ट्या वायुमत्स्यपुराणयोर्भारतवर्षस्य सर्वथा निर्वचनं कृतमस्ति यत् प्रजानां भरणपोषणकारणादेव संज्ञा भरत इत्यस्ति --

भरणाच्च प्रजानां वै मनुर्भरत उच्यते ।

निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम् ।।[१]

एतन्निरुक्तपुराणानुसाराधारेणायं देशो भारतमित्युच्यते इदमस्य रहस्यम् भरणपोषणात्मकेन गुणेन मनुर्भरतः प्रोक्तोऽस्ति, तथा यत्र भूभागे मनुप्रकृत्यनुसारं तस्य सन्ततयो निवसन्ति, तन्नाम भारतमिति जातम्। यद्वा राज्ञो ऋषभदेवतनयस्य भरतस्य नाम्नाऽयं देशो भारतमित्युच्यते, अथवा दौष्यन्तेर्भरतस्य सर्वदमनस्य नाम्नाऽस्माकं देशो भारतमिति विज्ञायते ।

पुराणेतिहासयोः या भारतवर्षस्य वन्दना विद्यते तासु महाभारतस्य भीष्मपर्वणि भारतवन्दना भावदृष्ट्या अत्यन्तमुत्कृष्टाऽस्ति -

प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च

पृथोऽस्तु राजन् वैन्यस्य तथैक्ष्वाकोर्महात्मनः ।।

अन्येषां च महाराज क्षत्रियाणां बलीयसाम् ।[२]

- - - - - - - - - - - - - - - - - -

१- वायुपुराण- ४५।७६

२- महाभारत भी० पर्व० ९।५-६

सर्वेषामेव राजेन्द्र प्रियं भारत ! भारतम्[1]।

उक्त पद्येषु येषां चक्रवर्तिनां राज्ञां नामानि गणितानि सन्ति, तेषां धार्मिको भाव: प्रजावात्सल्यम्, सत्यपालनं, परोपकारमयजीवनं, निरन्तरं लोककल्याणकामना तै: स्थापिता आदर्शमयी व्यवस्था च भारतीयगौरवस्यास्ति विषय: ।

ये महापुरुषा: स्वदेशस्य कालस्य च गुरोश्च प्रतिबिम्बयो भवन्ति, तेषामेव वृत्तान्तोपस्थापनं पुराणेतिहासयोरनिवार्यं जायते । एतदनुसारमेव तत्र तेषां चरित्रचित्रणं कृतमस्ति ।

पुराणेषु भारतवर्षं स्वर्गादप्युत्कृष्टं वर्णितमस्ति । तत्र सिद्धान्तितं वर्तते यत् देवा: स्वर्गे गीतं गायन्ति यो मानवा: सन्ति धन्यतमा ये भारते जन्म गृह्णन्ति ।

सुरत्वं प्राप्तानस्मानपेक्षाधिकं सुकृतिनस्ते, यतो भारतवर्षे जन्मग्रहणं नास्ति साधारणस्य पुण्यस्य फलम् ।

अपि च जम्बूद्वीपे वर्तमानेभ्योऽन्यवर्षेभ्यो भारतवर्षं सर्वश्रेष्ठं ज्येष्ठं चाभिमतम् । यतो हि अन्यानि वर्षाणि केवलं भोगस्थानानि सन्ति।

---

१- महाभारत भी०प० ९।५-६

किन्तु भारतं कर्मभूमिः प्रोक्तोऽस्ति । भारतवर्षे मनुष्या एव सत्कर्मानुष्ठान-द्वारा भोगं मोक्षं चोभयमपि लब्धुं शक्नुयात्। तथाहि विष्णुपुराणे --

तत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।

यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः।।

इतः सम्प्राप्यते स्वर्गो मुक्तिमस्मात् प्रयान्तिवै

तिर्यक्त्वं नरकं चापि यान्त्यतः पुरुषाः मुने।।[१]

इदमस्य रहस्यम् यत् भारतभूरेव सदसत्कर्मानुष्ठानयोग्या भूमिः । भारतादन्या भूमयो हि सुखःदुःखादात्मकारूपस्य भोगस्य स्थानानि इत्य-नुसन्धानविषयस्योपयोगिताया मम सिद्धिरेष्टा। अत्रैवानुष्ठितेन विहित-कर्मणा धर्मः निषिद्धेन च कर्मणाधर्मो जायते। ताभ्यां च यथाक्रमं सुखदुःखे तद् भोगाश्च जायन्ते ।

यदा काचिज्जातिः परस्परविद्वेषवशात् स्वकीयं आदर्शमयं चरित्रं विस्मृत्यात्मनः स्वरूपं परित्यजति, अन्याधीना च भवति तदा विश्वस्य इतरजातयः तस्या उपेक्षां कर्तुं प्रारभन्ते । तद्धार्मिकाः ग्रन्था पुराणादि पोपकल्पना, तत् पूर्वजा असभ्याः,तद्भाषा अव्यवहार्या तद्वेषभूषादिकं

- - - - - - - - - - - - - - -

१- विष्णुपुराण २।३।४।२२

चल्लाकवं पदाचारविचारव्यवहारादिकं च बालानां क्रीडनकम् इत्याद्युक्त्वा तां जातिं सर्वथा अयोग्यां उद्घोष्टुं चेष्टन्ते ।

एतन्नैसर्गिक नियमानुसारं विविधा जातयोऽन्येषां कुक्षे समागत्य स्वकं स्वरूपं परिहरन्ति । तासामस्तित्वं केवलं इतिहासपृष्ठेष्वाङ्कितमवतिष्ठते।

नानापुराणविरचस्येतिहासो अस्ति सदा यद् हिन्दूजातिः विश्वस्मिन् सर्वतः प्राचीनतमा । अस्या पवित्रतमुद्देश्यानि सन्ति, मातृदेवो भव, पितृदेवो भव, आचार्य देवो भवादि स्वाध्याय मा प्रवर्तितव्यं ईश्वरं प्रति अनन्यप्रेमप्रतिष्ठापनं समस्त विश्वं शक्तिमयं विष्णुमयं देवमयं मत्वा तत्र श्रद्धाचारणं च । अतस्तत्र विश्वबन्धुत्वभावनाया वसुधैव कुटुम्बकं इति कुतो भावः सर्वदा मम विषयस्योपयोगितायाः बोधमस्ति तिष्ठति च ।

यः हिन्दुजातिप्रारम्भतः अन्यासु जातिषु शासनं करोति स्म, सैव दैववशात् अन्याधीना भूत्वा शासिता शोषिता चाभवत्। सर्वप्रथमं हिन्दुजातौ बौद्धानां शासनमायात, ततो यवनानामक्रमणमभूत् । अनयोः शासनाधीनायाऽपि हिन्दुजात्या शिक्षापद्धतिः अनुसन्धानपद्धतिः स्वाधीनैव रक्षिता । एतत्परिणामस्वरूपेण कुमारिलभट्टस्वामिशङ्कराचार्य सदृश अद्भुतप्रतिभाशालिनो मनीषिणो अस्यां जात्यामुत्पद्य बौद्धसाम्राज्यं समूलमुन्मूलितं कृतम् ।

यवनशासनकालेऽपि शिक्षापद्धतिःहिन्दूनां बलेनैव सुरक्षिताऽभवत् । येनानेके धर्मवीरा हिन्दवः स्वजातेः धर्मस्य च संरक्षणे कृतसंकल्पा आसन् । महाराणाप्रताप-छत्रपतिशिवाजी-गुरुगोविन्द-हकीकतराय प्रभृतिभिर्वीर-पुरुषैः छिन्ना भिन्ना वा हिन्दुजातिः प्रणाशात् संरक्षिता ।

सर्वेषु पुराणेषु भगवतो जन्मानि कर्माणि च दिव्यानि भवन्ति। भगवान् न मनुष्यकर्मभिः प्रेरितो नापि तच्छरीरं पाञ्चभौतिकं भवति। यतो हि सकलकर्मभ्यः परोऽस्ति। अतः कर्मणा तस्य स्पर्शोऽपि न भवति । भगवता श्रीकृष्णेन स्वयमेवोक्तं गीतायाम् --

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स लिप्यते[1] ।।

भगवतः शरीरं साधारणमनुष्यस्येव न पाञ्चभौतिकैःउपादानैः उत्पद्यते - किन्तु भगवद्विग्रहो दिव्यो भवति । यदा भगवान् कृष्णः कारागृहे वसुदेवदेवकीसमक्षे प्रादुर्बभूव, तदा स सुदर्शनतया शङ्ख,चक्र,गदा, पद्मधारी चतुर्भुजरूपेण आविर्भवत् । तदुक्तम् श्रीमद्भागवते --

कारागृहे गच्छति भूमिपालो हेतुर्भयात्तत्कर्मबन्धः ।
एवं स सर्वेश्वरदेवदेवो दयावतारो न च कर्मबन्धः[2] ।।

- - - - - - - - - - - - - - - - - -

१- श्रीमद्भगवद्गीता ४।१४
२- भागवत् १०।३।८

एवं वाल्मीकीयरामायणे उत्तरकाण्डे लिखितमस्ति यद् रामस्य परमधामगमनसमये यदा देवैः सह ब्रह्मा समभ्युपेत्य वैष्णवे देहे प्रवेष्टुं प्रार्थयामास, तदा श्रीरामस्त्रिभिर्भ्रातृभिः सार्धं तेनैव शरीरेण वैष्णवं तेजः शरीरं प्रविवेश ।

लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलम् ।
योगधारणयाऽऽग्नेय्या दग्ध्वा धामाविशत् स्वकम् [1] ।।

पितामहवचः श्रुत्वा विनिश्चित्य महामतिः ।
विवेश वैष्णवं तेजः सशरीरः सहानुजः [2] ।।

वस्तुतो भगवतः शरीरं मायिकं न भवति, यतो हि मायाबन्धनात् स मायापतिः सर्वथा विमुक्तः। तत एवामलात्मनो महात्मनोऽपि भगवद्विग्रहं विलोक्य मुग्धा भवन्ति । शरशय्यायां शयानो भीष्मो यदा भगवतो वासुदेवस्य त्रिभुवनमोहनं रूपं व्यलोकयत्तदा स प्रार्थयामास ।

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या [3] ।।

---

१- वा०रा० ११।३१।६
२- ,, ,, ११०।१२
३- श्रीमद्भा०१।९।३३

प्रायः सर्वेषु पुराणेषु अवताराणां प्रसङ्गः समागतो विद्यते। शैवमतपोषकपुराणेषु भगवतः शिवस्यानेकेषामवताराणां चर्चाऽस्ति। वैष्णवसिद्धान्तपोषकपुराणेषु भगवतो विष्णोर्विभिन्नानां अवताराणां उल्लेखोऽस्ति।

शाक्तमतपोषकपुराणेषु भगवन्त्याः शक्तेः साधकाः विविधा अवतारा सूच्यन्ते। सूर्योपासनासम्बन्धिषु पुराणेषु सूर्यदेवस्य अवतार - वर्णनमस्ति। गाणपत्यपुराणेषु भगवतो गणपतेः अनेकावताराणां कथा दरीदृश्यन्ते।

सृष्टिकार्योपयोगिनो यस्य यस्य अवतारस्य नाम्ना यत् पुराणं निर्मितमस्ति तत्र तत्र तस्य तस्य अवतारस्य विशेषवर्णनं वर्तते तद्द्वारा च कस्मैचित् व्यक्तिविशेषाय कल्याणमूल्योपदेशोऽवश्यं यत् उपलभ्यते।

यथा मत्स्यपुराणे श्रीमत्स्यद्वारा सत्यव्रताय मनवे। कूर्मपुराणे कूर्मद्वारा देवताभ्यः वाराहपुराणे वराहद्वारा पृथिव्यै। नृसिंहपुराणे नृसिंहद्वारा भक्तराजाय प्रह्लादाय, वामनपुराणे च वामनद्वारा दानवीराय बलये अमूल्य उपदेशो दत्तो विद्यते।

सर्वेषु पुराणेषु अवतारचर्चाया इदमेवमुख्यं कारणमस्ति, यत् मनुष्याः अवताराणां निर्मितमादर्शमयं उपदेशप्रदं अनुकरणीयं च चरित्रं

समाकर्ण्यालौकिकं महिमानं बालस्य स्वान्तः  करणेषु भक्तिवैराग्यज्ञाना-दिद्वारा मानवजन्मधारणस्य फलम् प्राप्तिरूपं प्रभुं कथं प्राप्नुमवश्यं समर्था भवेयुरिति विषयस्योपयोगिताया मुख्यमुद्देश्यम् ।

पुराणेषु एकमत्या स्वीकृतमस्ति यद् भूभारहरणपूर्वकं धर्मसंस्थापन-द्वारा जगतोरक्षार्थे यथासमयं स्वयं सर्वशक्तिमान परमात्मादेवः  श्लाघ्ये पवित्रतमेऽत्र भारतवर्षे ऽवतरति ।

सर्वव्यापकस्य निराकारस्य परमात्मनो मानवपिण्डे जन्मभूत्वा संसारे आगमनम् आश्चर्यस्यास्ति विषयः। अतः अवतारविषये यदि परमात्मा अस्ति सर्वशक्तिमान् तदा अवतारमन्तराऽपि स्वेच्छामात्रेणैव दुष्टदमनं सज्जन-रक्षणं धर्मसंस्थापनं भूभारहरणञ्च कर्तुं प्रभवति ।

अतः दुःखमये मानवशरीरगृहबन्धे तदागमनं न समुचितं प्रतिभाति । परमात्मन सर्वव्यापकतया सर्वशक्तिमत्त्वाच्च तस्य शक्तिरपि सर्वव्यापिनी वर्तते । कथंचनात्मकहृदयद्वारा तस्य सा शक्तिः विकासमेति । अतः  संसारे या काऽपि शक्तिः दृश्यते सा तस्यैव शक्तिरस्ति ।

अस्याः शक्तेः कथङ्कारं विकासो जायते इति वै विषयस्य मन्त्रमूलकम् । अस्मिन् विषये पञ्चदशीकारेण विद्यारण्य स्वामिना लिखित-मस्ति यद् अखिलोये ब्रह्मणशक्तिः पूर्णा विद्यते । अस्याः शक्तेः हृदयस्था-श्रयेण यदा उल्लासो भवति तदैवास्मिन् संसारे तस्याः प्रकाशो जायते ।

सर्वशक्तिमयं ब्रह्म नित्यमापूर्णमद्वयम् ।

यथोल्लसति शक्त्याऽसौ प्रकाशमधिगच्छति[१] ॥

विकासप्राप्तेयं शक्तिः शास्त्रेषु कलात्मना वर्णिता भवति । यत्र पूर्णशक्तेर्विकासो भवति ।

यावत् सम्भवकार्याणां सम्बन्धोऽस्ति तावत् महतोऽपि महानपि जनः पुरुष एव मन्यते नावतारः । किन्तु, यत् कार्यं पुरुषशक्तेर्विरुद्धमस्ति, यत् पुरुषोऽसम्भवं मन्यते, तत् कार्यं सम्भवकर्ता अवतारः कथ्यते । जीवे परिमिताशक्तिः तिष्ठति , ईश्वरे च अपरिमिता, अतः जीवस्य सर्वेषु कार्येषु सफलीभूतं न भवति, किन्तु ईश्वरः सर्वेषु कार्येषु सफलो भवति । यतो हि तत्र शक्तिज्ञानयोरानन्त्यमस्ति। अतस्तस्या सफलतायाः प्रश्न एव नोदेति ।

मनुष्याणां समक्षे यदा घोराद् घोरतराऽपि आपदुपतिष्ठते, तदा महतो महानपि धर्मवेत्ता किंकर्तव्यविमूढो भवति, तस्य मनसि च बहुविधो विचार उपतिष्ठन्ते । तदेषादपि अनवधानतया पतनं जायते । एवं विचार्य विकटपरिस्थितौ पुण्यशालिनां उच्चगुरुपादानां परित्राणार्थं स्वपूर्वजानां रुचिरं चरित्रं स्मृत्वा पतनात् संरक्षणाय पुराणेषु वंशानुचरितस्य समावेशः कृतोऽस्ति ।

---

१- पञ्चदशी १३।७

पुराणानुसारमेव वंशानुचरितस्य ज्ञानं सम्यक् भवितुमर्हति । यदि-कदापि पुराणानि न स्युस्तर्हि कथमिदं ज्ञातुं शक्यते, यद् महाराजो युधिष्ठिरो हरिश्चन्द्रो वा भक्तः, सत्यवादी वासीत् ? राजा जनको विशिष्टो ब्रह्मज्ञानी बभूव, राजा दिलीपश्चापि गोभक्तो जातः, अर्जुनोऽद्वितीयो धनुर्धरोऽभवत्, ध्रुवप्रह्लादयो बालका अपि परमभगवद्भक्ता बभूवुः । भगवतो रामस्यादर्शमयं जीवनचरित्रं समस्तं विश्वं श्रद्धे ।

अनसूया सती-सीता-सावित्री-दमयन्ती प्रभृतीनां स्त्रीशिरोमणीनां भारतभूषणीनां रमणीनां पवित्रतमं पातिव्रत्यं, यच्छ्रुत्वा पापं दूरीभवति, सर्वेषां शिरश्च समुन्नतं जायते ।

यदि पुराणानि न स्युस्तर्हि क एषां पवित्रं चरित्रं बोधयेत्, यदि पुराणेषु वंशानुचरितं न श्रूयते, तर्हि हिन्दुजातेः समस्त गौरवज्ञानहृदयंच विलुप्येत् संस्कृति सदाचारास्तिकताधीरताब्रह्मचर्यपातिव्रत्य भगवद्भक्ति-ज्ञान-कर्मणां समुज्ज्वल उपदेशस्य कथङ्कारं प्राप्यते ।

पौराणिके वंशानुचरिते विशेषतो भारतीयानामेव राज्ञामादर्शमय समुज्ज्वलं चारु चरित्रं चित्रणं दृष्टिगोचरतामायाति । येन हिन्दूनां प्राचीन इतिहास सुरक्षितोऽस्ति ।

त्रिकालदर्शिनो महर्षेः व्यासस्य योगदृष्टौ तु स्थूलो मृत्युलोकः, सूक्ष्मो वा देवलोकः समानरूपेणाक्षिगोचरतामापद्यते । अतः पंचवर्णने देवी-सृष्टिः लौकिकी सृष्टिश्चोभयो सम्मिलिते वर्णिते स्तः । यथा सुरादीनां देवानां वर्णनं देवीसृष्टिवर्णनं इक्ष्वाकुप्रभृत्यो राज्ञां च प्रभवः लौकिकसृष्टि-वर्णनं उपलभ्यते ।

एवं पुराणेतिहासयोर्दर्शनस्य विषयस्योपयोगितायां प्रमुखानां त्रयाणामङ्गानां ज्ञान-भक्ति, मीमांसा, तत्त्वमीमांसा ,आचारमीमांसानां सामान्यं समीक्षणं आवश्यकमस्ति ।

तत्र स्पष्टास्पष्टरूपेण ज्ञानोपकरणेषु प्रमा प्रमातृ प्रमेय,प्रमाणानां तत्सम्बन्धिनां सर्वेश्वरात् सृष्टिप्रलय कालमानादीनां वर्णाश्रम धर्माचारविचार अष्टाङ्गयोगादीनां विवरणामुपलभ्यते। योनापेक्षितं तात्त्विकं ज्ञानं सिद्धान्त-रूपेण ज्ञायते एवेति निश्चप्रचम् । अत एव मोक्षादि सर्वकामनया भगवद् भक्तस्य आवश्यकत्वं अमलात्मना वैयासकिना श्रीमता शुकदेवेन स्पष्टतया सिद्धान्तितं श्रीमद्भागवते --

अकामः सर्वकामो वा मोक्षकाम उदारधीः ।

तीव्रेण भक्तियोगेन भक्ते पुरुषं परम् ॥[१]

- - - - - - - - - - - - - - - - -

१- श्रीमद्भा० २।३।१०

तस्मात् सर्वजनानां अद्भुता आनन्दघनसच्चिदानन्दपरमात्मतत्त्वोपलब्धिरपि अविच्छिन्नचिन्तनद्वारा परमतत्त्वपुरुषोत्तमप्राप्तिरेव पुराणानां परमं उपयोगप्रयोजनमवसीयते ।

पुराणानुशीलनेन प्रतीयते यत् अस्माकं पूर्वजानां स्वदेशं प्रति किमपि अगाधं प्रेमासीत्। पुराणानुसारमैतिहासिकभौगोलिकार्थिकसांस्कृतिकराजनीतिकक्षेत्रेषु भारतवर्षं सर्वोत्कृष्टमुक्तमस्ति । पुराणेषु स्तुतिद्वारा सर्वोच्चलोकप्राप्तिकर्ता भारतवर्षीयो मानवो न केवलं स्वर्गलोकभोगासक्तेभ्यो देवेभ्यः उत्कृष्टोऽभिमतः, अपितु भारतं कर्मभूमित्युक्तत्वादस्य महान् महत्त्वं गीतमस्ति ।

स्वायम्भुवपुत्रस्य प्रियव्रतस्य सन्ततिभिः समस्ते भूपृष्ठे स्वकीयाधिपत्यं स्थापयित्वा सर्वानपि द्वीपान् स्वकीयोपनिवेशान् निर्माय प्रतिवर्षं अनुकरणं कृतं तथा भारतीयसभ्यतायाः संस्कृतेः प्रचारः प्रसारश्च पूर्णतया कृत आसीत् ।

विष्णुपुराणानुसारे जम्बूद्वीपस्य वैशिष्ट्यमत्यन्तमपूर्वमुक्तमस्ति यत् सहस्रजन्मान्तरं महत्पुण्योदयेनैव खलु परमपवित्रे भारतवर्षे जीवस्य मनुष्यजन्मग्रहणस्यैव यापनायादेशो दत्तोऽस्ति ।

पौराणिके युगे श्रीरामादीनामेकपत्नव्रतस्य श्लाघ्यत्वे आदर्शे सत्यपि बहुविवाहस्यापि प्रथाया: प्रचलनमासीत् । सृष्टेरादिपुरुषस्य स्वायम्भुवमनो द्वितीयपुत्रस्य उत्तानपादस्य द्वे भार्ये आस्तां सुनीति: सुरुचिश्च । दक्षदुहितृषु कश्यपस्य १३ धर्मस्य १०, सोमस्य २७ अरिष्टनेमेः बहुपुत्रस्य २ अङ्गिरस: २ कृशाश्वस्य च २ पत्न्य आसन् ।

पौराणिकयुगे सामाजिकजीवने नारीणां महत्वपूर्णं स्थानमस्ति । आश्रमचतुष्टयेषु गृहस्थाश्रम: श्रेष्ठ: कथितो यत: स सर्वेषामाधारोऽस्ति। तत्र गृहस्थाश्रमे नारी गृहस्वामिनी गृहलक्ष्मीरिव स्वीकृतास्ति ।

पुराणेषु नारीणामधिकारेषु बलं न प्रदत्तं विद्यते । किन्तु तासां कर्तव्येषु बलमस्ति। नारीणां त्यागभावनायां धर्मस्य प्रेरणाऽस्ति । सत्कुलप्रसूता नारी पापभयात् पत्यु त्यागं न विधत्ते पत्न्यै पति: देवस्वरूपो विद्यते । अत: पत्यु सेवापत्न्या धर्मोऽस्ति ।

अष्टादशपुराणानां कर्ता सत्यवतीसुत: इति वचनानुसारं अष्टादश-पुराणानिमानि व्यासदेव रचितास्ति । तेनैव समन्वयात्मकदृष्ट्या विभिन्न-सम्प्रदायोपासकानां भक्तानां इष्टदेवतासु श्रद्धोत्पादनाय तत्तत्पुराणेषु तत्तद् देवानां उत्कृष्टतया प्रदर्शितास्ति ।

एतदनुसन्धानपूर्वकं पुराणानाम् अध्ययनेन इदं प्रतीयते यद् एकस्यैव परमात्मनो ब्रह्मविष्णुशिवशक्तिसूर्यादीनि विभिन्नानि स्वरूपाणि सन्ति, यतो हि सृष्टौ एषां कार्यं भिन्नं भिन्नं अस्ति ।

तथा च उपासकानां विभिन्नत्वात् पुराणानि विभिन्नदेवता-भक्तिशक्तिसम्पोषकानि सन्ति। यो हि मनुष्यो यस्य देवस्य भक्तो भवति, स तस्य देवस्य महत्त्वप्रकाशकं पुराणं विशेषतः समाद्रियते । अनुभवति च तत्र अष्टादशसु महापुराणेषूपपुराणेषु च भिन्नभिन्नसम्प्रदायसम्पोषकत्वेऽपि ब्रह्मवैष्णवशैवशक्तिपुराणेषु अष्टादशानां पुराणानां पाठ-श्रवणयोः फलस्य वर्णनं सर्वेषां कृते समानमेवास्ति ।
सौभाग्यमुपतिष्ठते -

अत्र जन्मसहस्राणां सहस्रैरपि सत्तम ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात्[1] ।।

शिवपुराणानुसारं भारतवर्षे एव स्वकर्मपरायणा मुनिजनाः इहलोक परलोकार्थं तपस्यन्ति धर्मप्रिया यज्वानो यजन्ते तथोदारा दानिनश्च सादर-पूर्वकमर्थिभ्यो दानं प्रददते —

- - - - - - - - - - - - - - - - - - - - - -

१— विष्णुपुराण २।३।२४

तपस्तपन्ति मुनयः जुह्वते चात्र यज्विनः

दानानि चात्र दीयन्ते परलोकार्थमादरात् ॥[१]

पुराणेष्वाख्यानां प्रसङ्गे भारतवर्षीयाणामनेकासां धर्मव्यवस्थानां विधानानामुल्लेखो विद्यते, या आकर्ण्य सहसा चित्तं चमत्कृतं भवति प्रसीदति च मनोनिरन्तरम् ।

देशधर्मैश्च तत् तत् देशसंस्कृति अनुसारं, तत्तद् देशमात्रस्य मानवैरनुष्ठीयमानो भवति। यथा भारतवर्षस्य देशधर्मो वर्णाश्रमधर्मो विद्यते, एतस्य परिपालनं सर्वविधाया देशोन्नतेर्मूलम् । तदुक्तेर्यथा पूर्वकालात् संघर्षस्य प्रादुर्भावेन देशो विविधाभिर्दुरवस्थाभिर्व्याप्तो मूल्याऽवनतिशिखरे समारोपिता।

अतोऽस्यदेशस्य समुन्नतये पुराणानुसारेण धर्मकर्मवर्णाश्रमधर्मावलम्बनमेव श्रेयस्करम् ।वर्णाश्रमधर्मस्य सम्यक्पालनं हि पुरुषार्थचतुष्टये प्रमुखस्य मोक्षस्य प्रासादे समारोढुमस्ति प्रथमं सोपानम् । एतदतिक्रम्य कोऽपि मानवो मनोऽभिलषितां सिद्धिं समासादयितुं न शक्नोति ।

तथाचोक्तम् कूर्मपुराणे —

- - - - - - - - - - - - - - - - - - - - - - -

१- शिवपुराण उ०सं० १६।१६

यदाचेदविरागः स्यात् स्थानं यत्नोदास्यमव्ययम् ।

वर्णाश्रमप्रयुक्तेन कर्मणा प्रीतिसंयुतः ।।

पूजयेद् भावयुक्तेन यावज्जीवं प्रतिज्ञया ।

चतुर्णामाश्रमाणां तु प्रोक्तोऽयं विधिवद्द्विजाः ।।

एतत् कथितं सर्वं शास्त्रसम्मतमुत्तमम् ।

नह्येतद् व्यतिक्रम्य सिद्धिं विन्दति मानवः ।।

धर्मशास्त्रानुसारं पुराणेष्वपि प्रथमे वयसि ब्रह्मचर्यपालनपूर्वकं विधिवत् विद्याध्ययनं विधाय गृहस्थाश्रमे प्रवेष्टुं कामनया यथाशक्ति गुरवे दक्षिणां दत्वा: तदनुमत्या ब्रह्मचर्यव्रतं समाप्य सत्कुलोत्पन्नया सवर्णया कन्यया सह विधिवत् पाणिग्रहणं कृत्वा सांसारिकव्यवहारिकानुष्ठान-पूर्वकं सुखेन समयं यापनायादेशो दत्तोऽस्ति ।

---:o:---

## उपसंहार:

---

संस्कृतवाङ्मये पुराणानामेकं विशिष्टं स्थानमस्ति, तथा तेषां महन्महत्त्वमपि विद्यते सर्वसाधारणलोकेषु सभ्यता संस्कृत्योः प्रचारप्रसारश्च पुराणानां प्रधानं कार्यमस्ति । पाश्चात्या इतिहासवेत्तारोऽपि पुराणानि भारतीयानाममूल्यं निधिं मन्यन्ते । यद्यपि भारतीयसाहित्ये पुराणैः सहेतिहासस्यापि नाम समागच्छति, तथापीतिहासे तासामेव व्यक्तिमूलकघटन-वर्णनं विद्यते, या भूतकाले व्यतीता ।

किन्तु पुराणानि भविष्यद् वर्तमानघटनानामपि उल्लेखं कुर्वन्ति । अतः पुराणानां विषयः इतिहासादपि अधिको व्यापको विस्तृतश्च विद्यते । वास्तविक इतिहासो न काव्यवत् कल्पनामात्रयुक्तो । न च स धर्मशास्त्र-वदादर्शोन्मुखो भवति सः । किन्तु सः तात्कालिकं यथार्थं चित्रमुपस्थापयति । कस्या अपि मानवजातेरितिहासः तदैव पूर्णो भवितुमर्हति, यदा तस्य कथानकं सृष्टेरारम्भतः क्रमबद्धरूपेण लिखितं स्यात् ।

इदं हि रूपं पुराणेषु पूर्णतया प्राप्यते । आधुनिकैरितिहासकारै-
रस्याः शैल्या उपेक्षा कृता, परन्तु मानवजन्मसमारभ्यैतिहासलेखनात् पूर्वं
सृष्टिप्रारम्भतो मनुष्यविकासस्येतिहासोऽपि लिखितः ।

मानवजन्मग्रहणात् पूर्वं जीवः किं किं रूपं धत्ते तथा तस्य क्रमिको
विकासः कथं जायते इत्यादेरपि मनोरमं विवेचनं कृतमस्ति । प्राचीनभारत-
स्येतिहासं पुराणेष्वेव निहितं सुरक्षितं चास्ते । सौभाग्येनास्माकमधुनातना
अपि केचनैतिह्यविदो भारतस्येतिहासनिर्माणे साम्प्रतं पाश्चात्यानां मुखा-
पेक्षितां विहाय पुराणसाहाय्यं गृह्णन्ति ।

पुराणेषु विविधानां विषयाणां साकल्येनैकत्र समवायात्
श्रुतिस्मृत्युदिते नेत्रे पुराणं हृदयं स्मृतम् । इत्यनुसारं पुराणं हृदयं निगद्यते ।
एवं नेत्रं विना मानवो जीवितुं शक्नोति परं हृदयं विनाऽत्र न कोऽपि
जीवितुं पारयति ।

अतः आत्मा पुराणं वेदानामिति स्कन्दपुराणीयं वचनं संगच्छते ।
सर्वसाकल्येन वस्तुतः पुराणेतिहासयोर्माध्यमेन प्राचीनभारतीयसंस्कृति-
धर्मकर्मजीवनस्य प्रत्यक्षं चित्रमुपतिष्ठते । महर्षिणा वेदव्यासेन तत्र मानव-
जीवनस्य समस्तानां व्यवहाराणामादर्शमयं चित्रमुपस्थापितमस्ति येनैतिहा-
सिक-सांस्कृतिक-सामाजिक-धार्मिक-नैतिकाध्ययने महत् साहाय्यमवाप्यते ।

अतः भारतीयसंस्कृतेः पूर्णज्ञानाय पुराणानां सर्वाङ्गीणमनु-शीलनं नितान्तमावश्यकमस्ति । संस्कृतवाङ्मये पौराणिकशक्तितत्त्वानां वर्णनं बहुदधिकभागमस्ति । शक्तितत्त्वमूलका सर्वेऽपि ग्रन्थविषयपूर्णाशास्त्रमय अनुमन्यते सर्वेषु शास्त्रेषु विवेकदीप इव । बहूनि ग्रन्थरत्नानि सन्ति यैः शक्तितत्त्वस्य वास्तविकं रहस्यस्वरूपं च सम्यगवगन्तुं शक्यते ।

पौराणिकशक्तितत्त्वविषयाणामवगाहनं कृत्वा अभ्युदयनिःश्रेयस प्राप्तौ समर्थाः स्युः । अनेनैव विचारधारणया प्रेरितोऽहं सर्वसाधारण-विषयत्वं शक्तितत्त्वं विवेचनमतीवमावश्यकम् ।

स्नेहप्रेमश्रद्धाभेदेन लौकिकोऽनुरागस्त्रिविधः । तत्र पुत्रकन्याशिष्यादिषु निम्नगामी अनुरागः स्नेह उच्यते । मित्रकलत्रादिषु समानगामी अनुरागः प्रेम निगद्यते । मातृपितृगुरुजनादिषु च मान्यगामी अनुरागश्श्रद्धानाम्ना व्यपदिश्यते । ईश्वराभिमुखी शक्तेराराधना प्रवर्द्धमाना श्रद्धाभक्तिरेव भक्तिपदवाच्यतां धत्ते ।

शक्तेः प्रति अनुरागोऽपि द्विविधः -- काममूलकः प्रेममूलकः । काममूलके शक्ते प्रति आसक्तिः प्रेममूलके च भावः प्राधान्यमासादयतः । कामस्य मूलं स्वार्थः तस्य लक्ष्यमनात्मेन्द्रियादिकम् । प्रेम्णो मूलं परार्थः तदीयं लक्ष्यमात्मा । अतः कामी यावतीं स्वार्थपरतां परित्यजति तावत्येव

तत्र परार्थपरता व्यज्यते, स च भक्तप्रेमिको गीयते । वस्तुतः प्रेमवृद्ध्या सहैव प्रेमिकस्य स्वार्थवृत्तिरपि क्षीयते, परिवर्द्धते च परार्थवृत्तिः।

तदनन्तरं करुणानुरागतरङ्गिणी कामभूमिं विहाय भक्तिप्रेमभूमौ प्रवहति । स्वार्थस्याज्ञानमूलत्वात् कामिनि विशुद्धप्रेमोदयाभावाद् नासौ पुरुषः भक्तिप्रेमि भक्तेरधिकारी, अपि तु भगवदुन्मुख प्रेमिक एव भवति भक्तेरधिकारी । भक्तौ स्नेहादयस्तद्भेदोऽपि वृत्यो लौकिकत्वाद्विनश्वरशीलाः, यतो जातो नश्वरत्वात् तदाश्रयोऽपि विनश्वरशील एव, किन्तु भक्तौ प्रति भक्तिस्तत्लक्षणाख्यः सा अनश्वरे परमात्मन्यलौकिकप्रीतिरूपासक्तिः । लौकिकव्यवहारमनुसृत्य मित्रपुत्रकलत्रादिभिर्सह स्नेह प्रेमश्रद्धादिसम्बन्धो भवति स नश्वरो बन्धनकारणं च, यतो हि तन्मूले मोहस्य कामूलकममत्वबुद्धिसद्-भावाद् जीवने बन्धनमेव लभ्यते, न मुक्तिः ।

परमेश्वरविषयिकालौकिकेऽनुरागे तु तद् भावाभावः तस्य नित्य-सत्यसनातनसकलकामनाश्रयभावाधीश्वरत्वात् भक्तेराधीना । अत ईश्वरे स्नेहा-दिव्यवहारो नूनमेव भक्तौ प्रति भक्तिपदवाच्यः । वस्तुतः आत्मसुखेच्छा-सम्बन्धसंयुक्तत्वात् मोहमिश्रिता लौकिकानुरागरूपाः स्नेहप्रेमश्रद्धादयः सत्वोन्मुखरवः प्रधानाः । भक्तेरनुरागरूपिणी भक्तिस्त्वलौकिकी मोहातीता शुद्धसत्वतत्त्वगुणमयी च प्रोच्यते ।

अतः भगवद्भक्तहृदयहारिणी साक्षान्मुक्तिदायिनी शक्तिर्भक्तिरिति-त्यत्र न कश्चित् सन्देहः ।

यथा हिमालयप्रदेशान्निर्गमनकालेऽतिशय चाञ्चल्यात् कापि धारा अलकनन्दा कापि मन्दाकिनी, काचिच्च भागीरथीति गीयते, पश्चात् तिस्रो मिलित्वा समतलभूमौ प्रवहन्त्यः पुष्टाः शान्ताश्च भूत्वा गङ्गानाम्ना व्यपदिश्यन्ते, तथैवानुरागमयी शक्त्यै प्रति भक्तिधारा स्नेहप्रेमश्रद्धासाधना-रूपेण पति-पुत्र-मित्र-पितृप्रभृतिषु प्रवहन्ती कल्परूपा पावनीशक्ति गीयते ।

ततश्च स्वीयत्रिविध नामरूपस्वभावान् परित्यज्य स्वार्थरहित भगवद्भावमयसमतलप्रदेशे एकीभूय शान्तधारारूपेण यदा प्रवहति तदेवासौ शक्तेधारा भक्तिरिति प्रोच्यते । तथा च पुत्रमित्रपितृप्रभृतिषु या अनुरागो-त्पत्तिः स्नेहप्रेमश्रद्धारूपेण जायते सैव पश्चाद् भगवद्भावोन्मुखी ईश्वरानुराग-रूपिणी शक्तिरित्यभिधीयते ।

शक्ते प्रति अनुरागोत्पत्तिः प्रथमावस्थायां मानवान्तःकरणे स्नेहप्रेमश्रद्धाभक्तिदर्शन आवाहनरूपेण जायते । नानारूपधारिण्यामस्या शक्त्यनुरागवृत्तौ यथायथाऽज्ञानस्वार्थेन्द्रियमूलिकाऽऽशक्तिह्रासमुपैति तथा तथा शक्तेऽनुरागवृत्तिरसौ पवित्रा सती शक्तिभावं प्राप्नोति । इयमेव शक्ते प्रति भक्तेः क्रमविकासरहस्यमवधेयम् ।

जीवो हि स्वस्वरूपं विस्मृत्य प्रकृतिसम्बद्धत्वात् तद्गतोच्चावचसुखदुःखादिधर्मान् आत्मन्यारोप्य घटीयन्त्रवद् जन्ममृत्युचक्रे परिभ्राम्यन्नाध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति दुःखत्रयमुपभुङ्क्ते, परन्तु यदा परमार्थतया इदमेवावधारयति यदहं शरीरत्रयानवच्छिन्नः तद्गतसुखदुःखासम्बद्धः सर्वव्यापकः पूर्णानन्दसच्चिदानन्दस्वरूपस्तदानीमसौ ज्ञानी भक्तः स्व स्व रूपमधिगम्य पूर्णसच्चिदानन्दसागरे निमज्जति । तदुक्तं श्रीमद्भागवते उद्धवं प्रति भगवता कृष्णेन --

तस्माद् ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धवः ।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः[1] ॥१॥

ज्ञानविज्ञानयज्ञेन मामिष्ट्वाऽऽत्मानमात्मनि ।
सर्वयज्ञपतिं मां वै संसिद्धिं मुनयोऽगमन्[2] ॥ २॥

भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि[3] ॥३॥

- - - - - - - - - - - - - - - - - - - - -

१- भागवत् ११।१९।५
२- ,, ११।१९।६
३- ,, ११।२९।३०

मानवानामन्तः करणे शक्त्यावेव भक्ति उपजायते । अतः आत्म-
साक्षात्कारं कुर्वता ज्ञानिना भक्तेन परमपदमधिगम्यते, आनन्दस्वरूपे सर्वाधारे
परमात्मनि परां अचलां भक्तिं लभमानस्य साधकस्य न किञ्चिदपि प्राप्तुम-
वशिष्यते ।

निर्विकल्प समाधिं प्राप्तवता साधकेन यः असीम आनन्दोऽधिगम्यते
नातो वाचा वर्णयितुं शक्यते । सच्चिदानन्दमहासागरे निमग्नस्य भक्त-
शिरोमणेः समस्तमपि संसारबन्धनं विच्छिद्यते । पञ्चभिः कोशैः सह आत्मनः
सम्बन्धेन या किल जीवभावसमुत्पत्तिः सा प्रणश्यति, भक्तिप्रभावेण योगी
भगवदानन्दसुधामधिगम्य संसारचक्र जन्ममृत्युभयाद् विमुच्यते ।

भक्तिलक्षणमीमांसायां कोऽस्ति भगवान्, किञ्चास्ति तस्य भक्तेः
स्वरूपमिति प्रश्ने संक्षेपादिदमेव वक्तुं शक्यते यत् -- या सर्वसाक्षी, सर्वा-
न्तर्यामी, सर्वशक्तिमयी, सर्वेश्वरी, सर्वशासकी, सर्वज्ञी निरतिशयज्ञानवती
शक्तिः सर्वशक्तिरूपमयी वास्ति । यस्या भक्त्या मानवः सकलदुर्गुणदुःख-
विमुक्तो भूत्वा विशुद्धो भवति योऽनन्यनाऽपि नो येषु दयां कृत्वा
पुराणेषु गीतायाञ्च सर्वशास्त्रेषु विधासु कृतस्वकीयप्रतिज्ञानुसारं प्राणिनां
कल्याणाय, धर्मस्य स्थापनाय अधर्मस्य निराशाय, सतां रक्षणाय, दुष्ट

दुष्टानां दलनाय च कल्पे कल्पे असंख्यकल्पे समये समये स्वमायया देवमानवपश्वादि-षु योनिषु युगे युगे भक्तानां आह्लादयति ।

शास्त्रीयमर्यादां पालयति, सुखयति च समस्त लोकम् । तस्मिन् परमाणुशक्तिरनन्यं प्रेम वा भक्तिरीया । एवञ्च जगदाधारपरमेश्वरविषयको-ऽनन्योऽनुरागो भावविषयकान्तः करणवृत्तिविशेषो वा शक्तिरिति प्रतिपद्यते ।

एतद्भेदविवेचने यद्यपि शैववैयाकरणादिविषये विदुषां विभिन्नं मतं विलोक्यते तथापि गुरुशास्त्रोपदेशद्वारा निषिद्धसाधनपरित्यागपूर्वकं विहित-साधनाभ्यासेन प्रथमदशायां विधीयमाना शिवं प्रति भक्तिरेव वैधी समा-ख्यायते । भक्तेः समुन्नतिभूमिमासादयितुमियं किल सोपानरूपा ।

शिवं प्रति यदा वैधी भक्तिमनुष्ठितो भक्तस्य हृदये भगवन्तं प्रत्येव विधोऽपूर्वोऽनुराग उत्पद्यते येनासौ दिवं भक्तो भगवद् भावसागरे निमग्नोऽमन्दमानन्दसन्दोहं लभते, तदानीं तस्य चेतसि तैलधारावदानन्दा-मृतसिञ्चनकारोऽनवच्छिन्नो भक्तिरसप्रवाहो विजृम्भते । इयं शिवं प्रति दशैव रागात्मिका भक्ति प्रोच्यते ।

दशायामस्यां भक्तस्य मनोमधुपः शिवपादपद्ममकरन्दसास्वाद-नोन्मत्तः सर्वत्र शक्तिरेव पश्यन्नानन्दनिमग्नो निरन्तरं तिष्ठति । भक्तहृदयं

सांसारिकेभ्यो विषयेभ्यो विरक्तं सन्नहर्निशं भगवतिशक्तौ लीनं भवति ।

पुराणागमशास्त्रपरम्परापर्यालोचनेन योगसाधनद्वारा चित्तवृत्ति-निरोधपूर्वकमन्तःकरणं निर्मलं विधाय शक्तिसाधको भक्तो प्रभावेन भगवतीं साक्षात्कृत्य तत् सन्निधानं लभमान आत्मज्ञानमधिगम्य निर्वाणपदं प्राप्तुं शक्नोतीति निश्चित्य उपासना परिपुष्ट्यै विश्वकल्याणकामनया महर्षिभिः सुगमोपायं शक्तिमधिकृत्य शास्त्रमाविष्कृतम् ।

पुण्यस्थलीभारतभूमिर्हि सरसस्य शक्तिरहस्यस्य स्निग्धया धारया मानवाः सिक्ताः आप्यायिताः च सन्ति । भारते शक्तिरहस्यं प्रवाहोऽनादि-कालत एव प्रचलन्नास्ते । स्निग्धानुरागसम्बन्धा भावप्रवणा शक्तिरहस्य-प्लाविता बहवो विद्वांसः सन्तो महात्मानश्चानायासेन परमात्मानं अवाप्य कृतकृत्यतामगुः यान्ति यास्यन्ति च ।

यद्यपि शक्तिरहस्यविषयकचिन्तनपरम्परायाः उदयस्तु अनादिकालत एव जात आसीत् । परन्तु उपलब्धसामग्रीप्रामाण्यात् तस्य प्रवर्तनं महर्षिव्यास-मुनित एव मन्यते प्राज्ञैः ।

विविधकण्टकाकीर्णं शक्तिसाधना वर्त्म विहाय परिष्कृतेन घण्टा-पथेन सञ्चरिष्णुनां शक्तिविदां विदां विपश्चितां मतेन श्रुत्यनुसारं स्वरूप-

तटस्थलक्षणलक्षितो ब्रह्मपरमात्मेत्यादिपर्यायो भक्तिरेवास्ति, त्वमेव साक्षात्कृत्य स्वल्पानन्दो जीवः प्रशस्तानन्दो भवतीति परमपुरुषार्थ-प्रापकतया भगवत्प्राप्त्यर्थं श्रुतेर्भक्तिमार्गोऽस्तीति सुगमोमार्गः यथा तेन भक्तैरवाप्यते ।

नित्यकर्मानुष्ठानाद् विशुद्धान्तः करणे श्रवणकीर्तनपूजासाधनादिना भवति भगवति प्रेमोद्भव इत्याभिलक्ष्य विपश्चिद्वरा यतिवर्याः भक्ति-साधका भक्तिरसायने सपरिकरं सोपपत्तिकं च भक्तिरसं व्यवस्थापितवान् । विद्वद्भिरत्र भक्तिः ज्ञानं कर्मयोगेभ्य श्रेष्ठतमा स्वीकृतास्ति ।

यथा समुद्रजलं बाष्पमेघवर्षादिक्रमेण परिणतं सत् पुनर्नदीद्वारा समुद्रमेवोपगच्छति, तथैव भक्तिस्वरूपसाधनात् प्रेमस्रोतसो भगवतो प्रेमधारा निःसृत्य भक्तानां मनांसि सिक्तान्ताभूयः प्रेमस्रोतः स्वरूपं परमात्मानमेवोपतिष्ठते ।

भारतीय भक्तिसाधनापद्धतौ भक्ति अनेकेषु रूपेष्वभिव्यक्तं वर्णितं भवति गुरुशिष्ययोः श्रद्धास्पदं परस्परं प्रेम, पतिपत्न्योरन्योन्यमनुरागाभिधं प्रेम, पितापुत्रयोरितरेतराश्रयं स्नेहाख्यं प्रेम, प्रेमप्रेरितः पित्रादिर्यथा स्वसन्ततिं पालयति, पोषयति, अभिरक्षति च सर्वेभ्यो बाधाभ्यः तथैव भक्तिरपि

भक्तप्रेमाभिभूतो भक्तान् पालयति, तेषां हितं कल्याणं मङ्गलं सर्वविधं सुखं विधत्ते, निरन्तरं च तदर्थं चिन्तयति ।

यथा पर्वतीयोच्चावचप्रदेशेषु मेघात् पतितं पानीयं शिलाखण्डैः संरुध्यमानमितस्ततः उच्छलमानं यावत् समतलभूमौ नोपतिष्ठते तावत् निर्मलं स्थिरं वा न भवति, तथैव सृष्टिसमये जीवोऽपि शक्तिपादपद्मतः पृथग्भूय: विभिन्नासु योनिषु संभ्रम्यमाणोऽनेकान् क्लेशांश्च लभमानो विविधां यातनामनुभवन् यावत् शक्तिपादपद्मं नोपतिष्ठते, तावत् तस्य पापतापयो: शान्तिर्न जायते ।

अतो जीव आनन्दधामानं शक्तिपीठस्थानमुपस्थायैव परमानन्द-मनुभवितुमर्हति, नान्यथा, तदर्थं कायाचारे भवति परमप्रेमरूपा, परमात्मनि पराकाष्ठाया अनुरक्तिरेव वा भक्तिरस्ति सरलं साधनम् । तत्राप्यनादि-कालतो विविधविषयासक्तस्य जीवस्यानायासेन शक्तिपदप्राप्तये मधुरभक्ति परमतमं शक्तिसाधनं समवस्थाप्यते ।

पुराणेषु शक्तिसाधनायां यादृशी कल्पनाऽस्ति, तन्त्रेषु च त्रिपुरसुन्दर्यां यद्रूपमुपवर्णितं, तदेव वर्णनं राधाभावेन गोपीभावेन च बहुशोपलभ्यते। शक्तेर्गीततत्त्वस्य मूलबीजमपि शैवसाधनासरणिषु लभ्यते ।

तन्त्रे भगवान् श्रीकृष्णः कामबीजात्मकः ,राधादेवी च रतिबीजात्मिका प्रोक्तास्ति । बौद्धतान्त्रिकसमाराधनया अपि मधुरभक्तिविकासेऽत्यन्तो योग आसीत् ।

यद्यपि भक्तिसम्बन्धिनी रचना पुराणेषु तथा प्राचीनसाहित्येऽपि प्रचुरमात्रायां प्राप्यते, किन्तु मध्यकालीनभक्तिसाधककवीनां कृतिषु यथा निपुणतया तल्लीलावलीनतया, एकाग्रतया च भक्तिसाधनाया यादृशं विविधं मनोरमं रूपं व्यक्तीभवति न तादृशमन्यत्रोपलभ्यते । वस्तुतः स्वेष्ट-देवताराधनं भक्तिसाधनं विना न केनचिदपि सम्प्रदाये धर्मीवर्गैः न वा कैश्चित् पुरुषोत्कर्षमवाप्तुं शक्यते । अत एव विश्वस्मिन् सर्वेषु धर्मसम्प्रदायेषु स्व स्व विश्वासानुसारं विभिन्नाः भक्तिसाधनसम्बन्धिनः विशेषाः दरी-दृश्यन्ते ।

भक्तिनामगुणादि श्रवणं भक्तेरस्यारम्भिकं सोपानम्, यदि यदा कीर्तनस्मरणात्मनिवेदनादिद्वारा साधकं भक्तिपादपद्मप्रासादे प्रापयति, तदा स कृतकृत्यो भूत्वा लोकातीतं पूर्णं सुखमनुभवति ।

:::

## सहायकग्रन्थ-सूची


(१) अथर्ववेदसंहिता

(२) अष्टाध्यायी : पाणिनि

(३) अग्निपुराण — चौखम्बा संस्कृतसिरीज

(४) अमरकोश — ,, ,, ,,

(५) अप्रकाशिता उपनिषद

(६) ईशानसंहिता

(७) ईशादिनौ उपनिषद् — गीताप्रेस गोरखपुर

(८) उपनिषद -छान्दोग्य बृहदारण्यक- ,, ,,

(९) ऋग्वेदसंहिता — सातवलेकर स्वाध्यायमण्डल

(१०) कूर्मपुराण — काशिराज ट्रस्ट ,रामनगर,वाराणसी

(११) गरुडपुराण — पण्डितपुस्तकालय,काशी

(१२) गायत्री स्तोत्र

(१३) जयाख्यान संहिता

(१४) तान्त्रिकवाङ्मय में शाक्तसाधना: म०म०गोपीनाथ कविराज

(१५) दुर्गासप्तशती — गीताप्रेस,गोरखपुर

(१६) दुर्गासप्तशती — पौराणिक एवं वैदिक शोधसंस्थान नैमिषारण्य,सीतापुर ।

| | | |
|---|---|---|
| (१७) | देवीभागवत | गुरुमण्डल ग्रन्थमाला, कलकत्ता |
| (१८) | देवीगीता | |
| (१९) | पद्मपुराण | |
| (२०) | पुराणविमर्श: | पं० बलदेव उपाध्याय<br>चौखम्भा संस्कृत सिरीज |
| (२१) | पुराणदिग्दर्शन | माधवाचार्य - दिल्ली |
| (२२) | पौराणिक एवं तान्त्रिकरिलीजन- जे०एन० बनर्जी | |
| (२३) | ब्रह्मवैवर्तपुराण | गुरुमण्डल ग्रन्थमाला, कलकत्ता |
| (२४) | बृहदारण्यक उपनिषद् | गीताप्रेस, गोरखपुर |
| (२५) | भुवनेश्वरी स्तोत्र | ,, ,, |
| (२६) | मत्स्यपुराण | ,, ,, |
| (२७) | महाभारत | ,, ,, |
| (२८) | मनुस्मृति | ,, ,, |
| (२९) | मार्कण्डेय पुराण | गुरुमण्डल ग्रन्थमाला, कलकत्ता |
| (३०) | लिङ्गपुराण | खेमराज श्रीकृष्णदास, बम्बई |
| (३१) | वराहपुराण | ,, ,, |
| (३२) | वायुपुराण | ,, ,, |

(३३) वामनपुराण गुरुमण्डल ग्रन्थमाला

(३४) विष्णुपुराण ,, ,,

(३५) वाल्मीकिरामायण गीताप्रेस,गोरखपुर

(३६) शक्तिभाष्य : श्री शङ्कराचार्यः

(३७) शक्ति षट्क गीताप्रेस,गोरखपुर

(३८) शाक्तसम्प्रदाय नर्मदाशंकर मेहता

(३९) शारदा तिलक कलकत्ता

(४०) शिवपुराण पण्डितपुस्तकालय

:::